**नाशिताशेषदेशोऽथ स्फीतशीतभयाकुलः ।**
**दुल्चः कश्मीरतः तारबलमार्गेण निर्ययौ ॥ १५९ ॥**

---

(B 185) करुणागौरवघृणा द्रतं गन्तुमशाक्तिषु ।
वालवृद्धाबलास्वेते त्यक्तवन्तः पलायिनः ।

(B 186) न भुक्तं क्षुधितैर्मार्गे न पीतं तृषितैरपि ।
किमन्यद्भयसम्भ्रान्तैः पश्चात्तैर्नापि वीक्षितम् ।

(B 187) क्षुधा केचित्तृषा केचिद्भिया केचित्परे ह्रिया । [35]
भयाद्बिलदरीष्वेव प्रविश्यान्तर्विपेदिरे ।

(B 188) बिलप्रविष्टांस्तान्छ्रुत्वा ततो निष्कासनेच्छवः ।
निष्कारुण्यास्तुरुष्कास्ते धूमं बिलमुखे ददुः ।

(B 189) धूमेनान्तर्विपन्नानां नराणामस्थिराशयः ।
दृश्यन्तेऽद्यापि धूमोत्थं मालिन्यं च गुहामुखे । [40]

(B 190) राजापचारमकरोत् प्रजासु फलितस्तु सः ।
नारीणां चपला दृष्टिर्दन्तैर्गण्डस्तु खण्ड्यते ।

[(l. 2) B ड्ड (mislec. for Dev. द्ड) लुच्यो-. (l.5) B (evid. emend.) [ए] व (for [इ] व). —(l.14) B द् om. in [अ] नलाद. —(l.20) D म्लेच्छोछिष्टं (sic); B (evid. emend.) निबद्धैर् (for तैर्ब°). In D words ending with बद्धैर् effaced by overwriting. —(l.24) D अचितयन् ( sic ). —(l.32) D °लांबे (<लाम्बे mislec. for S'ār. स्वे) ते; D after पलायिनः reads युगलकम्. —(l. 39) D anusvāra om. in विपन्नानां. —(l.42) D र् om. in दृष्टिर्. In $S'_6$, 9* on supp. folio bound between leaf nos. 7 and 8 ending with the remark: ८ पृष्ठे ६ पङ्क्तौ पतितमेतज्जोनराजतरङ्गिण्याम् ]

159 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_{2\cdot6}$ ( before corr: ) C -देवो ($S'_2$ marg. °षो); B -देषो (for °शो). —b) D B $S'_6$ marg. हिमपात- (for स्फीतशीत-). —c) $S'_2$ K C ड (mislec. for S'ār. ड्ड) ल्चः; D दुल्च्यः; B ड्ड ( mislec. for S'ār. दु ) ल्चः; $S'_6$ ड (marg. ड्ड) ल्चः. cd) K words beginning with °रतः तारबल- in 159[cd] and ending with काश्मी° in 160[a] are on marg.; $S'_2$ ताररं (mislec. for S'ār. ब) ल-.

जनाः काश्मीरिका दुर्गविलेभ्यो मूषका इव।
दुलचोतौ गते वन्दीकृतशेषा विनिर्ययुः ॥ १६० ॥

नालब्ध पितरं पुत्रः पिता तं च न कंचन।
भ्रातृंश्च भ्रातरो दुल्चराक्षसोपप्लवात्यये ॥ १६१ ॥

मितलोका खिलक्षेत्रा निर्भोज्या दर्भनिर्भरा।
सर्गारम्भ इव प्रायस्तदा काश्मीरभूरभूत् ॥ १६२ ॥

सामर्थ्याज्ञ्यगृहीद् दुल्चो रिञ्चनः प्राभवत्पुनः।
विश्वमन्धयति ध्वान्ते सुखभाजोऽभिसारिकाः ॥ १६३ ॥

दुल्चराहुविनिर्मुक्तं राजानं तुङ्गिमस्पृशा।
अरुरुत्सत्स शृङ्गेण रिञ्चनास्ताचलस्ततः ॥ १६४ ॥

---

160 $S'_{4\cdot5}$ missing (cf. v. l. 1 ). —[b]) $S'_{3\cdot6}$ C मूषिका. —[c]) $S'_1$ gloss marg. *pr. m.* दुलच एव ओतुः विडालः तस्मिन् दुलचोतौ; $S'_2$ डलचेतोचते वन्दे° (sic); C ड ( mislec. for S'ār. दु ) लचे ( erroneously) ऽतो.

—For 160 D B $S'_6$ marg. subst.:

10* (B 192) ओताविव गते तस्मिन्काश्मीरा मूषका इव।
मन्दं मन्दं विनिर्याता मृतशेषा विलान्तरात्।

161 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —[a]) $S'_2$ °लब्धा (sic). —[b]) D कथंचन (for न कंचन). —[c]) $S'_2$ K C ड (mislec. for S'ār. दु) ल्च–; $S'_6$ ड (marg. डु) ल्च–; D दुल्च्य–; B डु (mislec. for S'ār. दु) ल्च–.

162 $S'_{4\cdot5}$ missing ( cf. v. l.1 ). —[d]) $S'_2$ D B कश्मीर–.

163 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —[a]) $S'_{1-3\cdot6}$ K C D समर्थान् ( emended as in text with B ); $S'_2$ C ड (mislec. for S'ār. दु) ल्चो; D दुल्च्यो; B डु ( mislec. for S'ār. दु ) °ल्चो; $S'_6$ ड (marg. डु) ल्चो. —[b]) D B ततः ( for पुनः ). —[c]) $S'_{1\cdot2\cdot6}$ K C D B ध्वान्तं (mislec. for S'ār. न्ते).

164 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —[a]) $S'_2$ C ड (mislec. for S'ār. दु) ल्च–; K B डुल्च–; $S'_6$ ड (marg. डु) ल्च–; $S'_2$ °निर्मुक्त–; $S'_3$ C °निर्भुक्तं. —[c]) $S'_3$ आरुरु°.

दृष्ट्वा गगनगिर्यग्रे भास्वन्तं रिञ्चनं स्थितम्।
अशङ्क्यत न कै राज्ञः प्रत्यासन्नोऽस्तसंस्तवः ॥ १६५ ॥

रिञ्चनश्येनराजस्य जिहीर्षोर्नगरामिषम्।
कुलचन्द्रो रामचन्द्रो विघ्नं चक्रे पदे पदे ॥ १६६ ॥

भौट्टांल्लहरकोट्टान्तः पट्टविक्रयकैतवात्।
प्रत्यहं वञ्चनोद्योगी रिञ्चनोऽथ विसृष्टवान् ॥ १६७ ॥

तथैव लहरस्यान्तर्भुट्टलोके प्रवेशिते।
अपीप्यद् रामचन्द्रास्रमधु शस्त्राणि रिञ्चनः ॥ १६८ ॥

रामचन्द्रकुलोद्यानकल्पवल्लीं स रिञ्चनः।
वक्षःस्थले महाबाहुः कोटादेवीमरोपयत् ॥ १६९ ॥

श्रीरिञ्चनभयाद्राजा नगरं त्यक्तवांस्ततः।
विप्रशापाग्निदग्धानां कुतः स्यादुदयाङ्कुरः ॥ १७० ॥

---

165 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_3$ गमन–; C गगण–. —c) $S'_3$ (before corr.) अशाङ्कित; K उपशंक्यते (sic). —d) D प्रत्यासनो (sic).

166 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_3$ ( before corr. ) –राज्यस्य.

167 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_{2\cdot6}$ (before corr.) D B भोट्टां°; $S'_3$ –कोटान्तः. —b) $S'_{1-3\cdot6}$ K C –कौतुकात् (emended as in text with D B).

168 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —b) $S'_{2\cdot6}$ (after corr.) D B भो ($S'_6$ before corr. भौ) ट्ट–; $S'_3$ ( before corr. ) प्रविशते. —c) $S'_{1-3\cdot6}$ K C B अपिप्यद् (emended as in text with D); C –चन्द्रास्रं.

169 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_1$ (after *sec. m.* corr.) $_3$ –कुलोद्याने. —b) $S'_6$ marg. K C B –कल्ह- ( mislec. for S'ar. ल्प–). —c) D visarga om. in वक्षः°.

170 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —b) $S'_3$ (before corr.) °वानुतः (for °वांस्ततः). —d) $S'_1$ उदयाङ्कुरः (overwritten *pr.m.*).

प्रमण्डलगुहां राजजम्बुर्भीतोऽविशत्ततः ।
पापस्य तादृशो मृत्युः संमुखस्य रणे कथम् ॥ १७१ ॥

वैरिधाराधरश्चित्रं रणे राजास्त्रवर्षणैः ।
दण्डदानां द्विजातीनां चक्रे नेत्रेष्ववग्रहम् ॥ १७२ ॥

पञ्चाहोनांश्चतुर्मासान् वर्षांश्चैकोनविंशतिम् ।
स राजराक्षसो रक्षाव्याजात् क्षोणीमभक्षयत् ॥ १७३ ॥

श्रीरिञ्चनसुरत्राणो भुजवातायने महीम् ।
व्यशिश्रमदथ श्रान्तां दौःस्थ्याद्दुःस्थितिविप्लवैः ॥ १७४ ॥

पूर्वदृष्टमिवाशेषं तिमिरापगमे पुमान् ।
कश्मीरमण्डलं पूर्वराजसौख्यं तदैक्षत ॥ १७५ ॥

दीपैरिव प्रतिस्थानं यैर्लवन्यैः स्थिरं स्थितम् ।
अकम्प्यन्त प्रभातस्य ते राज्ञो बलवायुना ॥ १७६ ॥

मन्त्रसूच्या कृते भेदे बाणसूत्रे प्रवेशिनि ।
अभूल्लवन्यकन्थायाश्चित्रं विश्लथता तदा ॥ १७७ ॥

---

171 S′4.5 missing ( cf. v. l. 1 ). —a) S′3 (after corr.) -गुहा. —b) D -जंमुर् (sic).

172 S′4.5 missing ( cf. v. l. 1 ).

173 S′4.5 missing ( cf. v. l. 1 ). —d) S′6 ( before corr. ) C क्षौणीम्. S′2 after अभक्षयत् (figure) 16 (unexplained).

174 S′4.5 missing ( cf. v. l. 1 ). —b) D B S′6 marg. श्रान्तां यवनविप्लवैः. —c) D B S′6 marg. अनयाद्विश्रमं तुङ्गे. —d) D B S′6 marg. as 174 b; S′3 C दौस्थात् (sic); S′6 दौत्स्थ्या ( mislec. for S′ār. स्स्थ्या) द्; S′6 दुस्थिति-.

175 S′4.5 missing ( cf. v. l. 1 ). —c) S′1.3 K C D B -मण्डलः पू° (<S′ār. °लस्पू° mislec. for S′ār. °म्पू°); S′6 ( after corr. ) -मण्डलः.

176 S′4.5 missing ( cf. v. l. 1 ). —b) D B (gram. assim.) स्थिरैः. —c) S′2.3 आ (S′3 अ) क्रम्यन्त; C B S′6 अकम्पन्त.

177 S′4.5 missing (cf. v. l. 1). —a) K -सूध्या (mislec. for S′ār. च्या); S′2.6 C -शुद्धया (for -सूच्या). —c) S′3 लवण्य- (*sup. lin. pr. m.* न्य-).

वने कण्टकिनीवाङ्गनघ्नो यत्राकुलोऽभवत् ।
तत्रैव व्योम्नि पत्रीव देशे समचरन्नृपः ॥ १७८ ॥

तस्य दाक्षिण्यदक्षस्य प्रजानां हितहेतुना ।
पुत्रे मन्त्रिणि मित्रे वा दुष्टे नालक्ष्यत क्षमा ॥ १७९ ॥

छेदं यच्छन्नतुच्छानां वैरिणामुच्छलच्छ्रियाम् ।
आच्छोदनमगच्छत्स छत्रशाली कदाचन ॥ १८० ॥

डुक्कभ्राता तिमिर्नाम मार्गे सन्तापखेदतः ।
गोपाल्याः कुत्रचिद् ग्रामे क्षीरं निष्पीतवान् हठात् ॥ १८१ ॥

राज्ञा विज्ञापितेनाथ सद्यो गोपालयोषिता ।
अनुयुक्तस्तिमिर्भीत्या व्यधात्सर्वस्य निह्नवम् ॥ १८२ ॥

असत्ये भाविता गोपी यदा धैर्यान्न सास्खलत् ।
पानाशयं तिमेरेव स सत्यैक्षी व्यदारयत् ॥ १८३ ॥

---

178 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_2$ D कण्ठकि°. —b) C $S'_6$ marg. -नङ्घो ( by syll. contam. for नघ्नो ). $S'_2$ (evid. emend.) भवेत् ( for [अ] भवत् ).

179 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —c) D दुष्टे (for पुत्रे). —d) D पुत्रे (for दुष्टे).

180 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_2$ च्छेदं; $S'_3$ च्छेयन्छ (sic) त्त्र° (mislec. for S'ār. न्न°); K च्छेदयं (sic) श्छ (mislec. for S'ār. च्छ) न्न-. —b) D उछलछ्रियाम् (sic). —c) $S'_2$ आच्छोटनम्; K अच्छो°.

181 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_2$ टक्क-; $S'_3$ दुल्च- (marg. °क्क- ⌊for टुक्क-⌋); $S'_6$ ( after corr. ) टुक्क-. —b) $S'_{3\cdot6}$ (before corr.) C खेदितः.

182 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —c) D र् om. in तिमिर् :

183 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —b) $S'_3$ after °स्खलत् Kākapada: + and 183 cd marg. *pr. m.* —c) C °यन्ति (by padānta-sandhi for °यं ति) मेर्; K एवं (for एव).

तस्य पानाशयाद्दीर्णान्निर्यान्त्या क्षीरधारया ।
राज्ञः कीर्तिर्मुखश्रीश्च गोप्याः प्रापत्प्रसन्नताम् ॥ १८४ ॥

वानवाले निवसतोरसुवातां कयोश्चन ।
अश्वे किशोरकौ तुल्यौ कस्मिन्नपि वनान्तरे ॥ १८५ ॥

सिंहसंज्ञपितापत्या तयोरन्यतरा वने ।
अश्वसादृश्यवात्सल्यादपुपुत्रीयिषत्परम् ॥ १८६ ॥

मदीयोऽयं मदीयोऽयमित्यसञ्जातनिश्चयौ ।
वडवाधिपती क्षोभाद्राजान्तिकमगच्छताम् ॥ १८७ ॥

स विवादं तयोः श्रुत्वा स्वान्तिकं स्वीयमानुषैः ।
वडवे च किशोरं च राजाभ्यानाययत्ततः ॥ १८८ ॥

तस्मिन्किशोरके बाल्याद् दूरं धावति लीलया ।
माता धात्री च नितरामस्निह्यच्चाप्यहेषयत् ॥ १८९ ॥

सभ्येष्वनेलमूकेषु वादिनोः क्षोभसज्जयोः ।
अश्वे नावानयन्मध्येवितस्तं सकिशोरके ॥ १९० ॥

---

184 $S'_{4.5}$ missing ( cf. v. l. 1 ). —[d]) C $S'_{6}$ ( before corr. ) गोप्या; D B प्राप.

185 $S'_{4.5}$ missing ( cf. v. l. 1 ). —[a]) $S'_{6}$ वार° ( marg. वान° ); C °बाले; $RSs_{2}$ वनवरालि–. न prob. mislec. for S'ār. र in वान°, cf. Kal. I. 121 वारबाला°, v. l. वनबाला.

186 $S'_{4.5}$ missing ( cf. v. l. 1 ). —[a]) $S'_{1\cdot 3}$ K D B –संज्ञापिता° ( emended as in text ); $S'_{2\cdot 6}$ C –संक्षयिता° (for –संज्ञपिता°). —[b]) $S'_{1-3\cdot 6}$ K C D B अन्यतमा ( emended as in text ). —[c]) $S'_{6}$ –सादृश्याद् (marg. °श्य–). —[d]) $S'_{2-6}$ अपपु°; $S'_{3}$ (before corr.) अपुपुत्र°.

187 $S'_{4.5}$ missing ( cf. v. l. 1 ). —[b]) $S'_{2}$ [आ] सञ्जात– (sic); K इति स° (sic). —[c]) K वरु (mislec. for S'ār. ड) वा°.

188 $S'_{4.5}$ missing ( cf. v. l. 1 ). —[d]) D [अ] भ्यानययत्.

189 $S'_{4.5}$ missing ( cf. v. l. 1 ). —[d]) K D अस्निह्यश्च ( mislec. for S'ār. च्च).

190 $S'_{4.5}$ missing ( cf. v l. 1 ). —[d]) D –वितस्तां (sic).

बालाश्वं पातितं नद्यां नावो राज्ञा महाधिया।
हठादन्वपतन्माता परा परमहेषयत् ॥ १९१ ॥

संदिग्धव्यवहाराणामेवं निश्चयकर्तरि।
तस्मिन्राज्ञि जनोऽमंस्त कृतं युगमिवागतम् ॥ १९२ ॥

श्रीदेवस्वामिनं शैवीं दीक्षां याचन्नराधिपः।
नान्वग्राहि स भौट्टत्वात्तेनापात्रत्वशङ्कया ॥ १९३ ॥

अनुजस्तनुजो बन्धुर्मन्त्री सहचरः सखा।
व्यालराजो नृपस्याभूत्सत्यैकव्रतनिष्ठया ॥ १९४ ॥

जहौ व्यालः कृतं राज्ञा न स व्यालकृतं पुनः।
मनो हि कायिकं हन्ति तत्कृतं न वपुः पुनः ॥ १९५ ॥

कलानिधौ रसमये व्याले भूलोकभास्वतः।
मूर्च्छिता रुचिरच्छैत्सीदच्छेद्यं जगतां तमः ॥ १९६ ॥

---

191 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —[a]) D पतितं.
192 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —[b]) $S'_2$ -कारिणि (for -कर्तरि).
193 $S'_{4\cdot5}$ missing (cf. v. l. 1). —[b]) $S'_2$ anusvāra om. in दीक्षां. —[c]) $S'_{2\ 6}$ (after corr.) D B भोट्ट°; C भोट्ठ° (sic).
194 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). K reads after 194[b] व्यालराजो नृपस्तनुजोर्म (sic) न्त्री सहचरः सखा (later smeared over with yellow pigment). Then follows 194[cd].
195 $S'_{4\cdot5}$ missing (cf. v. l. 1). —[a]) D visarga om. in व्यालः. —[b]) $S'_2$ -गतं (for -कृतं). —[d]) K repeats after 195[d] मनो हि कायि (later smeared over with yellow pigment).
196 $S'_{4\cdot5}$ missing (cf. v. l. 1). —[c]) D रुचिरै (by syll. contam. for र)च्छै°.

—After 196 D B $S_6$ marg. ins. :

11* (B 229) प्रवेष्टुकामं कश्मीरान्निवर्तयितुमञ्जसा।
दुल्च्यं धनप्रयोगेण यो विसृष्टो महीभुजा।
(B 230) अवमन्त्र्य प्रविष्टेऽथ दुलुच्ये भयतो गतः।
गान्धारदेशमुद्यानदेवो लब्धान्तरस्ततः।

[(l. 2) B डु (mislec. for Dev. दु) ल्चं. —(l. 3) B डु (mislec. for Dev. दु) लुच्ये].

श्रीमानुद्यानदेवोऽथ रन्ध्रप्रहरणोद्यतः ।
समादिक्षत ट्टक्कादीन्गान्धारस्थो भयादिति ॥ १९७ ॥

जीवतामेव गन्तव्यं जाने तन्नरकान्तरम् ।
यत्सेव्यतेऽविशेषज्ञः स्वामी सम्मानलिप्सया ॥ १९८ ॥

भुङ्क्ते व्यालः श्रियं प्राणपणैर्युष्माभिरर्जिताम् ।
करौ साधयतो यत्नाद्रसना भोगभागिनी ॥ १९९ ॥

ईश्वरो भूतिलिप्ताङ्गो व्यालं हारीचिकीर्षति ।
अनास्थां तु सुवर्णेषु युष्मासु विदधाति सः ॥ २०० ॥

क्षीरमात्रैकपायित्वं निमित्तीकृत्य भूपतिः ।
युष्मच्छौर्याभिशङ्कित्वात् तिमिं तिमिमिवावधीत् ॥ २०१ ॥

एवं सन्देशनिर्भिन्नाः ट्टक्काद्याः शुक्लङ्किताः ।
विंशप्रस्थे कदाचित्ते प्रजह्रुरथ भूभुजम् ॥ २०२ ॥

तत्खड्गधारासंपातैर्व्यालस्तेषां हृदन्तरात् ।
स्वैश्वर्यतापमनुदद् राजाऽमूर्च्छत्तु केवलम् ॥ २०३ ॥

---

197 S$'_{4\cdot5}$ missing (cf. v. l. 1). —c) S$'_3$ दुक्का° (for ट्टक्का°). —d) D B S$'_6$ marg. उपगान्धारमाश्रयन्.

198 S$'_{4\cdot5}$ missing (cf. v. l. 1). —b) S$'_{2\cdot3\cdot6}$ K C नगरा° (for नरका°. Thus marg. in S$'_6$). —c) S$'_2$ सेव्यतो (sic); C B °ते विशे°. —d) C श्वा (Bengāli speech-habit for स्वा) मी.

199 S$'_{4\cdot5}$ missing (cf. v. l. 1). —b) D र् om. in -पणैर्.

200 S$'_{4\cdot5}$ missing (cf. v. l. 1). —b) C S$'_6$ हठी (mislec. for S'ār. हारी°. Thus marg. in S$'_6$). —c) S$'_6$ marg. तु.

201 S$'_{4\cdot5}$ missing (cf. v. l. 1). —cd) K °त्वोतिमं (for °त्वात् तिमिं).

202 S$'_{4\cdot5}$ missing (cf. v. l. 1). —a) K -निभिन्नाः. —b) S$'_3$ D °न्ना दु (D टु) क्का°; S$'_2$ टक्का° (for ट्टक्का°). —d) C प्रजर्हुर् (sic); S$'_1$ भूभुजः (emended as in text with S$'_{2\cdot3\cdot6}$ K C D B); K भूर्भुजम् (sic).

203 S$'_{4\cdot5}$ missing (cf. v. l. 1). —b) S$'_6$ त (marg. हृ) द°; K ह्य (mislec. for S'ār. हृ) द°. —d) S$'_2$ B मूर्छ (B र्च्छे) तु.

तेऽथ लब्धजयम्मन्यास्तद्वधापोढमन्यवः ।
नगरान्तर्ययू राज्यग्रहणार्थमहङ्कृताः ॥ २०४ ॥

क्षणं मृत इव स्थित्वा भूयो घातभयान्नृपः ।
दूरं गतान्रिपून्दृष्ट्वा राज्ये राजोदतिष्ठत ॥ २०५ ॥

आरुक्षन् राजधानीं ते यावत्तावन्नराधिपम् ।
अपेतमूर्च्छमायान्तमद्राक्षुः क्षुद्रबुद्धयः ॥ २०६ ॥

त्वया किं न त्वया किं न हतो राजेत्यनीतयः ।
परस्परविवादात्ते तत्कालं चुक्षुभुर्जडाः ॥ २०७ ॥

सान्योन्यमन्यवोऽन्योन्यलोठनाद्राजसद्मनः ।
कर्तव्यं मारणं राज्ञो व्यधुः स्वस्य स्वयं जडाः ॥ २०८ ॥

शेषान्राजाथ दुःशीलाञ्छूलारोपेण केवलम् ।
उच्चैस्तामनयन्मानी सर्वथाधोगतिं पुनः ॥ २०९ ॥

---

204 $S'_{4\cdot5}$ missing (cf. v. l. 1). —a) $S'_2$ लुब्ध-. —ab) $S'_6$ °न्या उ (mislec. for S'ār. त) द्°. —b) $S'_1$ -मन्यव: (overwritten).

205 $S'_{4\cdot5}$ missing (cf. v. l. 1).

206 $S'_{4\cdot5}$ missing (cf. v. l. 1). —a) K आरुक्षद्रा° ( mislec. for S'ār. °न्रा°); D आरुरु (by ditto.) क्षन् . —c) K आयात्त (mislec. for S'ār. न्त) म् .

207 $S'_{4\cdot5}$ missing (cf. v. l. 1). —c) $S'_{2\cdot6}$ (before corr.) C °वादान्ते. —d) $S'_3$ च (sic) क्षुभुर ; D जना: (mislec. for S'ār: डा:).

208 $S'_{4\cdot5}$ missing (cf. v. l. 1). —a) $S'_2$ अन्योन्य- (for सान्योन्य-); $S'_2$ -मन्यषो (mislec. for S'ār. वो). —c) $S'_{1-3\cdot6}$ KCB मरणं; D मारणं C as in text ); $S'_{1-3\cdot6}$ K C राज्ञा (as in text).

209 $S'_{4\cdot5}$ missing (cf. v. l. 1). —c) $S'_2$ उच्चंताम् (sic); M (evid. emend.) उच्चताम् ; D B M आनयन् . —d) D B $S'_6$ marg. तत: (for पुन:).

सगर्भा वैरिभौट्टस्त्री रोषवान्स व्यदीदरत् ।
असिभिर्भूपतिर्गर्भशालिशिम्बीर्नखैरिव ॥ २१० ॥

तद्द्रोहरोषजा पीडा राज्ञस्तत्कुलमारणात् ।
चित्ते शान्तिमगात्खड्गघातोत्था न तु मूर्धनि ॥ २११ ॥

दुःस्वप्नमिव तद्दृष्ट्वा ड्डकादिचरितं क्षणात् ।
प्रबुद्धेव पुनः प्रापदभयेन सुखं मही ॥ २१२ ॥

अद्रोहमध्यगे राजा शहमेरे प्रसन्नधीः ।
सकोटामातृकं वृद्धयै स्वपुत्रं हैदरं ददौ ॥ २१३ ॥

वर्धितः कोटया देव्या प्रावृषेव महीरुहः ।
सच्छायत्वं स्फुरत्पत्रः शहमेरो न्यषेवत ॥ २१४ ॥

परिखाच्छलतोऽकीर्त्या स्वपराजयजातया ।
परितो वलितं राजा स्वनामाङ्कं पुरं व्यधात् ॥ २१५ ॥

पौषदुर्दिनमार्ताण्डसन्निभो धरणीपतिः ।
मासांश्च कतिचिद् भूयः प्रकाशमकरोद् भुवः ॥ २१६ ॥

---

210 $S'_{4\cdot5}$ missing (cf. v. l. 1). —a) $S'_1$ -कौ (prob. mislec. for S'ār. भौ) ट्ट–; $S'_2$ -कोटा–; $S'_3$ -कोटि–; $S'_6$ K C $RSs_1$ -कोट्ट; D B -भोट्ट–. —b) $S'_3$ सन् (for स); $S'_3$ व्यधीदरत् . —d) K शिम्बीन्न (mislec. for S'ār. र्न) खैर ; M (evid. emend.) शिम्बी न°.

211 $S'_{4\cdot5}$ missing (cf. v. l. 1). —a) $S'_6$ *sup. lin.* रोष in °हरोषजा. —c) K खङ्गा (mislec. for S'ār. ङ्ग–).

212 $S'_{4\cdot5}$ missing (cf. v. l. 1). —b) $S'_2$ टक्का°; $S'_3$ डुका°; $S'_6$ C ड्ड ($S'_6$ marg. as in text) क्का°; K ट्व (mislec. for S'ār. ड्ड) क्का°. —d) $S'_2$ समं (for सुखं); $S'_6$ (erroneously) महीम् .

213 $S'_{4\cdot5}$ missing (cf. v. l. 1). —b) $S'_{2\cdot3\cdot6}$ D B शाहमेरे.

214 $S'_{4\cdot5}$ missing (cf. v. l. 1). —b) $S'_1$ (before corr.) K पावृष्येव; D B $S'_6$ (after corr.) प्रावृषीव. —c) K स्फुरत्पुत्रः. —d) $S'_2$ शाह°; K न्यपेवते.

215 $S'_{4\cdot5}$ missing (cf. v. l. 1). —c) K (before corr.) पारितो; $S'_6$ C बलितं.

216 $S'_{4\cdot5}$ missing ( cf. v. l. 1 ). —a) $S'_{2\cdot6}$ K C B -मार्तण्ड–, b) $S'_3$ -सन्निधौ (sic) (for °भो).

हेमन्ते शैत्यपारुष्यदोषेण धरणीपतेः ।
मरुत्कोपेन नैविड्यं शिरःपीडाऽग्रहीत्तराम् ॥ २१७ ॥

सदाऽनेकोत्तमाङ्गानां पीडाहरगुणश्रियः ।
भूपतेरुत्तमाङ्गस्य पीडा कष्टमवर्धत ॥ २१८ ॥

एकादश्यां ततः पौषे नवनन्दाङ्कवत्सरे ।
निरस्ता मृत्युवैद्येन भूपतेर्मूर्धवेदना ॥ २१९ ॥

एकादशदिनैरूनौ मासौ त्रीन्वत्सरानपि ।
क्षमां संरक्ष्य स स्वर्गं ययौ रिञ्चनभूपतिः ॥ २२० ॥

पुत्रं हैदरनामानं वाल्यादनभिषिक्तवान् ।
अतथाविधशक्तित्वाद्राज्यं स्वेनाप्यसंवहन् ॥ २२१ ॥

लवन्यैः कुलनाथत्वाद् रिञ्चने प्रतिघादपि ।
अव्याहतप्रवेशाशो मतिमाञ्शाहमेरकः ॥ २२२ ॥

समं श्रीकोटया देव्या मूर्तयेव जयश्रिया ।
तदोदयनदेवं तं कश्मीरक्ष्मामलम्भयत् ॥ २२३ ॥

राज्यलक्ष्मीर्महादोला गुणबद्धा गरीयसी ।
रिञ्चनोच्चैःपदं गत्वा राजाधःपदमाश्रयत् ॥ २२४ ॥

---

217 S′ $_{4\cdot5}$ missing (cf. v. l. 1). —[a]) S′$_2$ चै (mislec. for S′ār. शै) त्य-. —[b]) S′$_6$ (before corr.) -पतिः. —[d]) D [अ]ग्रहीत्तटं (sic).

218 S′ $_{4\cdot5}$ missing (cf. v. l. 1). —[a]) K [अ]नेकोतु (mislec. for S′ār. त्त) मा°:

219 S′ $_{4\cdot5}$ missing (cf. v. l. 1). —[d]) S′$_{1-3\cdot6}$ (before corr.) K C मृत्यु- (emended to मूर्ध as in text with D B).

220 S′ $_{4\cdot5}$ missing (cf. v. l. 1). —[a]) K -दिनैर्थ (mislec. for S′ār. रू) नौ; S′ $_{2\cdot3}$ न्यूनौ (for ऊनौ). —[d]) S′$_2$ डञ्चन- (for रिञ्चन-);

221 S′ $_{4\cdot5}$ missing (cf. v. l. 1).

222 S′$_{4\cdot5}$ missing (cf. v. l. 1). —[a]) S′$_3$ लवण्यैः (marg. *pr. m.* as in text). —[c]) D -प्रवेशाशं.

223 S′ $_{4\cdot5}$ missing (cf. v. l. 1). —[d]) S′$_2$ D अलम्बयत्.

224 S′ $_{4\cdot5}$ missing (cf. v. l. 1). —[a]) S′ $_{1-3\cdot6}$ K C B र् om. in लक्ष्मीर्. —[c]) M (evid. emend.) °नोच्चपदं. —[d]) S′$_2$ राजायः° (sic).

राजा शङ्केरपुत्रौ तौ ज्यंशराऽल्लेशरौ तदा ।
क्रमराज्यादिदेशानां स्वाम्यदानादरञ्जयत् ॥ २२५ ॥

धीरिवासीत्तदा कोटादेवी सर्वाधिकारिणी ।
राजा देह इवात्यर्थं तदादिष्टं समाचरत् ॥ २२६ ॥

तेजसा पिहितान्यासन्यानि रिञ्चनभास्वतः ।
लवन्यज्योतिषां राजप्रदोषेऽभूत्तदोदयः ॥ २२७ ॥

यस्याक्रम्यत सौम्यस्य गृहिण्या कोटया गृहम् ।
विषयाक्रमणं तस्य लवन्यैः किं नु शोच्यते ॥ २२८ ॥

लवन्यदेशचण्डालगृहस्पर्शविवर्जकः ।
स श्रोत्रिय इवानैषीत्कालं स्नानतपोजपैः ॥ २२९ ॥

आस्तिकत्वं कियत्तस्य वर्ण्यते व्रणधारिणः ।
क्रिमिमर्दभयाद् घण्टां योऽवध्नाद्वाजिनो गले ॥ २३० ॥

तावद् द्रविणतामेव कोशालङ्करणं दधत् ।
कण्ठभूषां समौलिं स चक्रिणेऽदित काञ्चनीम् ॥ २३१ ॥

---

225 S′ 4.5 missing (cf. v. l. 1). —a) S′ 2.3 शाङ्केर-. —b) $S'_2$ ज्यंशिरालेशिरौ; $S'_3$ °ल्लेश्वरौ; $RSs_2$ ज्यंशरआलमशार-; M (evid. emend.) जंशेदाल्लेश्वरौ and जंशेदाल्लिशहौ.

226 $S'_4$ missing (cf. v. l. 1). $S'_5$ begins with वा सर्वा° in 226[b]. —c) $S'_1$ D इव त्व (sic) र्थं.

227 $S'_4$ missing (cf. v. l. 1). —c) $S'_3$ लवण्य- (*sup. lin. pr. m.* °न्य-). —d) $S'_6$ प्र marg. in -प्रदोषे.

228 $S'_4$ missing (cf. v. l. 1). —d) $S'_3$ न(for नु); K शोध्य (mislec. for S′ār. च्य) ते.

229 $S'_4$ missing (cf. v. l. 1). —c) $S'_6$ नै marg. in [अ]नैषीत्. —d) C -जयैः; D -जलैः° (for जपैः).

230 $S'_4$ missing (cf. v. l. 1). —b) $S'_3$ (after corr.) 5 K वर्णि- (for वर्ण-). —c). $S'_2$ क्रमि-.

231 $S'_4$ missing (cf. v. l. 1). —c) $S'_1$ कण्ठाभूषां.

अथ मुग्धपुरस्वामिदत्तानीकिन्यहङ्कृतः ।
कश्मीरानचलोऽविक्षद्बलाद् दुल्च इवापरः ॥ २३२ ॥

स्वपक्षैराक्षिपत्याशा बलेनाक्रम्य मेदिनीम् ।
नाऽचले गोत्रभित्त्वं स कर्तुमैष्ट महीवृषा ॥ २३३ ॥

प्राप्ते भीमानकं तस्मिन्ससैन्ये दैन्यमाश्रितः ।
भौट्टदेशमगात्तूर्णमुर्वीपरिवृढो भयात् ॥ २३४ ॥

निवर्तय चमूमन्यां किं मिथ्या देशपीडया ।
अराजकास्त्वया पाल्याः कश्मीराः कुलनाथवत् ॥ २३५ ॥

इति श्रीकोट्यामात्यैः प्रेरितैर्लेखधारिभिः ।
आसारसैन्यमचलः प्रत्यमुञ्चद्विमोहितः ॥ २३६ ॥

प्रतिमुक्तनिजासारः सारहीनोऽचलः स तैः ।
मार्गोत्सवच्छलात्कंचित्कालं मार्गे विलम्बितः ॥ २३७ ॥

तावच्छ्रीकोटया देव्या तदा पालयितुं प्रजाः ।
भौट्टः खेरिञ्चनो नाम राजभावे न्ययुज्यत ॥ २३८ ॥

प्रमीतभर्तृकोत्पन्नमृतापत्येव सा तदा ।
अदूयत निजैः सर्वैश्चिरस्याचलशेमुषी ॥ २३९ ॥

---

232 S′$_4$ missing (cf. v. l. 1). —d) S′$_{2.5.6}$ K C ड ( mislec. for S′ār. दु)ल्च; D दुल्च्य; B ड्ड (mislec. for Dev. दु) ल्च.

233 S′$_4$ missing (cf. v. l. 1).

234 S′$_4$ missing (cf. v. l. 1). —b) K -सैन्य-. —c) S′$_{2.3}$ K D भोट्ट–; K अगातू (mislec. for S′ār. त्तू )र्णम् .

235 S′$_4$ missing (cf. v. l. 1). —a) S′$_2$ द(mislec. for S′ār. च)मूम् .

236 S′$_4$ missing (cf. v. l. 1). —d) S′$_5$ after °मोहितः *int. lin. sec. m.* युग्मं.

237 S′$_4$ missing (cf. v. l. 1). —d) S′$_6$ मार्गं (mislec. for S′ār. °र्गे).

238 S′$_4$ missing (cf. v. l. 1). —c) S′$_{2.6}$ D B भोट्टः. —d) K °वे र (marg. त्य mislec. for S′ār. न्य) युज्यत.

239 S′$_4$ missing (cf. v. l. 1) —b) S′$_5$ (before corr.); K मृतास (mislec. for Dev. प) त्येव.

तुषारलिङ्गपूजाभिः कृतार्थीकृत्य वासरान् ।
भौट्टदेशान्निजं देशमागच्छद्भीतभीर्नृपः ॥ २४० ॥

उदयाद्रिभुवा पूर्णः शशीवाथ स कोटया ।
खेरिश्चनतमोनाशी शिरसाऽधारि सादरम् ॥ २४१ ॥

यं कोटाऽसूत जट्टाख्यं भिक्षणाख्यस्य मन्त्रिणः ।
वर्धनायात्मजं राजा स तं मृत्युमिवादित ॥ २४२ ॥

शहमेरः स वीरोऽथ परिपालितरैश्चनिः ।
अचक्षुष्यः क्षमाभर्तुः पुत्रप्रेमभरादभूत् ॥ २४३ ॥

देव्यास्तु समदृष्टित्वात्पुत्रयोरुभयोरपि ।
राज्ञो द्वेष्योऽपि शह्मेरो न भयेन स पस्पृशे ॥ २४४ ॥

अचलोपप्लवातङ्के भयाल्लोकैः समाश्रितः ।
शह्मेरश्च स राजानं न तृणायाप्यजीगणत् ॥ २४५ ॥

शह्मेरो हैदरश्येनं दर्शयित्वा मुहुर्मुहुः ।
अभाययत्तरां राजपक्षिणं तं दिवानिशम् ॥ २४६ ॥

रक्षंस्तटस्थानुद्वेगरहितो जलवर्जितः ।
अल्लेश्वराम्बुपूरः स प्रजाश्चित्रमतारयत् ॥ २४७ ॥

---

240 $S'_4$ missing (cf. v. l. 1). K marg. 240 *ab.* —c) K marg. भौट्टदे°; $S'_{2\cdot3}$ K D B भोट्ट–. —d) $S'_{2\cdot6}$ C B अगच्छद्.

241 $S'_4$ missing (cf. v. l. 1).

242 $S'_4$ missing (cf. v. l. 1). —a) K C कोट्टा°; $S'_{3\cdot5}$ (marg. *sec. m.*) C [अ] दू (mislec. for S'ār. सू) त; K marg. सूत जट्टा in कोट्टासूत जट्टाख्यं. —d) M (evid. emend.) मृत्योर्.

243 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot3}$ D शाह°.

244 $S'_4$ missing (cf. v. l. 1). —c) $S'_2$ राज्ञे (for राज्ञो); $S'_{2\cdot3}$ शाह्मे°. —d) $S'_{2\cdot3\cdot5}$ C नाभयेन (for न भयेन).

245 $S'_4$ missing (cf. v. l. 1). —c) $S'_2$ शाहमेरस्स; (for शह्मेरश्च स); $S'_3$ शाह्मे°.

246 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot3}$ (before corr.) शाह्मे°.

247 $S'_4$ missing (cf. v. l. 1). —b) K -रहित्तो (sic). —c) $S'_{2\cdot5}$ K अल्लेशि ($S'_5$ K श) रा°; $S'_6$ (before corr.) अल्लेश्विरा°; $RSs_2$ आलंशिर–. —d) D B $S'_6$ *sup. lin.* अतापयत्.

शिरःशाटकहिन्दाख्यौ समभूषयतामुभौ ।
चन्द्रार्काविव तस्याशां शूरौ पौत्रौ गुणोच्छ्रितौ ॥ २४८ ॥

द्वारैश्वर्यात् स्फुरद्दर्पो राजाज्ञालङ्घनोद्यतः ।
शङ्करः स विपद्द्वारम् अभूद्भूपतिसेविनाम् ॥ २४९ ॥

सोऽक्लेश्वरसुतां दत्त्वा लुस्तस्य तदधीशितुः ।
श्रीशङ्करपुरं जित्वा राज्ञः शङ्कामवर्धयत् ॥ २५० ॥

वशे तेलाकशूरोऽस्य भाङ्गिलैश्वर्यभाजनम् ।
ज्यंशरस्य सुतां हस्तेकृत्य कृत्यविदोऽभवत् ॥ २५१ ॥

बहुरूपजयी लक्ष्मीनिधिरच्युततापदम् ।
शमालां स नृसिंहोऽथ दैत्यश्रियमिवादुनोत् ॥ २५२ ॥

मकरालयगाम्भीर्यः करालस्वो जयश्रियः ।
कराले स करालौजाः करमालम्बयज्जनान् ॥ २५३ ॥

---

248 $S'_4$ missing (cf. v. l. 1). —[a]) $RSs_{1\cdot2}$ शिरःकवाटहिन्दौ. —[b]) $S'_{1\cdot3\cdot5}$ K C °भूयिष ($S'_3$ marg. षिय) ताम् (emended as in text with $S'_{2\cdot6}$ ⌊after corr.⌋ D B). —[d]) $S'_3$ (before corr.) पुत्रौ.

249 $S'_4$ missing (cf. v. l. 1). —[c]) $S'_{2\cdot3}$ (before corr.) शाङ्करः.

250 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{2\cdot3}$ [अ] ह्लेशि ($S'_3$ लेश्व) र-. —[b]) $RSs_{1\cdot2}$ लुप्त– (mislec. for S'ār. स्त-).

251 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_2$ वशैतलाक–; $S'_3$ वशेतुलोक–; $S'_5$ K वशेत(K before corr. ते) लोकशूरस्य ($S'_5$ marg. *sec. m.* वशतैलाकशूरो°); $S'_6$ C वशतै ($S'_6$ marg. ते) लाक–. —[c]) $S'_1$ C जं (C ज्यं)सरस्य; $S'_2$ ज्यंशिरस्य; D जंशरस्य; $S'_5$ in सुतां anusvāra supplied *sec. m.*

252 $S'_4$ missing (cf. v. l. 1). —[d]) $S'_2$ [अ]धुनोत्; K अड (mislec. for S'ār. दु)नोत्.

253 $S'_4$ missing (cf. v. l. 1).

असस्मरत् स्मेरयशा दह्यमानमितस्ततः ।
राज्ञः कलशदेवस्य विजयेशपुरं ततः ॥ २५४ ॥

स्थित्यै प्रकल्प्य चक्रस्य स्वस्य चक्रधराचलम् ।
शङ्करोऽचलकार्याणि जनस्य समदर्शयत् ॥ २५५ ॥

कम्पनेश्वरलक्ष्मस्य लक्ष्मीमिव सुतां दधत् ।
अल्लेशो लब्धवाञ्शुद्धं सुदायमिव सद्यशः ॥ २५६ ॥

वरिङ्गरङ्गशैलूषं कोटराजमथाग्रहीत् ।
शङ्करस्तनयारत्नगुहरोन्मालकेन सः ॥ २५७ ॥

साम्नः केचित्परे भेदाद् दानादन्ये परे भयात् ।
मान्यतामनयन्धन्या लवन्यास्तस्य शासनम् ॥ २५८ ॥

---

254 $S'_4$ missing (cf. v. l. 1). —a) $S'_{1\cdot2\cdot5}$ (after corr.) $_6$ C D B असिस° (emended as in text with $S'_3$ K); $S'_{2\cdot6}$ C °स्मरन् mislec. for S'ār. त् in conj. °त्से°). —c) C कलस-.

255 $S'_4$ missing (cf v. l. 1). —b) $S'_2$ °द (mislec. for S'ār. च) लम् . —c) $S'_2$ का (sic) ह्मरो; $S'_3$ शा (after corr. as in text) ङ्करो; $S'_2$ [अ]द (mislec. for S'ār. च)ल-.

256 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot6}$ C -लक्ष्य ($S'_6$ marg. क्ष्म)स्य; $S'_5$ लक्ष्म (marg. *sec. m.* क्ष्य) स्य. —b) $S'_{1-3\cdot5}$ K C लक्ष्मीसर्वस्वतां ददत् (doubtfully emended as in text with D B); $S'_6$ -सर्वस्व (marg. मिव, स)तां दधत् . —c) $S'_{1-3\cdot5\cdot6}$ K C चित्रं स (doubtfully emended to अल्लेशो as in text with D B). —d) $S'_2$ D B स्वदायम् ; $S'_2$ सद्यशाः.

257 $S'_4$ missing (cf. v. l. 1). —a) $S'_1$ नरिङ्ग–; $S'_{2\cdot3\cdot6}$ C नरेन्द्र ($S'_6$ marg. नारिङ्ग–); $S'_5$ K नरोन्सा (⌊K °त्सा⌋ $S'_5$ marg. *sec. m.* नरेन्द्र ); D B नारिङ्ग– (emended as in text with P T ), see NOTES. —c) $S'_1$ = *ह्मर–; $S'_2$ शाह्मर-; $S'_5$ (before corr.) K -रत्नो. —d) $S'_{2\cdot3\cdot5\cdot6}$ K C -ग्रहणोन्मानकेन (for -गुहरोन्मालकेन); D B $S'_6$ (marg.) °न्मालिकेन.

258 $S'_4$ missing (cf. v. l. 1). —a) $S'_2$ साम्ना; $S'_{3\cdot6}$ (before corr.) साम्नाः; K साम्: (mislec. for S'ār. म्नः). $S'_2$ दण्डाद् (for भेदाद्). —c) $S'_2$ मानतामानयन्. -ध most prob. is a mislec. for S'ār. व in conj. न्ध, thus वन्या (for धन्या) is suggested.

लवन्यलोकस्तत्पुत्रीर्माला इव बभार ताः ।
नाजानाद् भुजगीर्घोरविषाः प्राणहरीः पुनः ॥ २५९ ॥

राजबीजिविधेयत्वान्मन्त्राद्विक्रमतश्च कः ।
शहमेरहरेर्नाभूल्लवन्यद्विरदो वशे ॥ २६० ॥

शहमेराम्बुपूरेण कमलोल्लासशालिना ।
आक्रान्तः परितो राजा मृद्राशिस्थद्रुमोपमः ॥ २६१ ॥

पुरमात्राधिपत्योत्थलज्जयेव महीपतेः ।
जीवितं दूरमगमच्छुद्धेन यशसा समम् ॥ २६२ ॥

शिवरात्रित्रयोदश्यां वर्षे राजा चतुर्दशे ।
क्षमावान्स क्षमामौञ्जीच्छह्मेरस्पर्शदूषिताम् ॥ २६३ ॥

---

259 $S'_4$ missing (cf. v. l. 1). —d) D B $S'_6$ marg. तु ताः (for पुनः).

260 $S'_4$ missing (cf. v. l. 1). —b) $S'_{1\cdot3\cdot5}$ K C नः (emended to कः as in text with D B); $S'_{2\cdot5}$ (marg. *sec. m.*) $_6$ (before corr.) वा (for कः). —c) $S'_{1-3\cdot5\cdot6}$ (before corr.) K C कः श ($S'_{2\cdot3}$ [before corr.] शा)ह्मेर- (emended as in text with D B); $S'_{1\cdot5}$ (before *sec. m.* corr.) [अ] भूर् (⌊sic⌋for अभूल्).

261 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot3}$ (before corr.) शाह°; $S'_5$ (before corr.) K शह्मेरा° submetric (for शहमेरा°). —b) $S'_2$ कामनो°; $S'_5$ K C का ($S'_5$ marg. *sec. m* क)मलो°; D B $S'_6$ marg. सर्वतः क्रान्तमण्डलः. —cd) D B $S'_6$ marg. भूपतिस्तुङ्गमृद्राशिस्थायिवृक्षतुलामगात्. —d) $S'_5$ (before corr.) K मुद्राशि°.

262 $S'_4$ missing (cf. v. l. 1). —a) K words beginning with °त्थलज्जयेव in 262ab and ending with °गमश्छु° (mislec. for S'ār. च्छु) in 262cd marg. *pr. m.*

263 $S'_4$ missing (cf v. l. 1). —d) $S'_1$ (before corr.) $_{2\cdot3}$ (before corr.) शाह्मरे; $S'_2$ after -दूषिताम् (figure) 13 (to denote Udayana Deva 13th ruler).
—After 263 D B $S'_6$ marg. ins.:

12 * (B 298) अब्दान्पञ्चदश द्वौ च मासौ द्वौ वासरावपि ।
कश्मीरकाश्यपीभोगमकार्षीत्स महीपतिः ।

[(l. 1) D अब्धान् (emended as above with B)]

अथ शह्मेरभीत्या श्रीकोटा चत्वार्यहानि सा ।
गूढेङ्गितानयद् गुप्तिं भूपालप्रमयादिकम् ॥ २६४ ॥

शह्मेरो मत्सुतद्वारा साम्राज्यं स्वीकरोतु मा ।
इति ज्यायांसमुत्सृज्य बालत्वाच्च परं सुतम् ॥ २६५ ॥

पुत्रस्नेहेन वृद्धत्वदोषेण च विमोहिता ।
अवरुद्धमनिच्छन्ती श्रीकोटामहिषी ततः ॥ २६६ ॥

स्त्रीभावाद्बन्धुभावाच्च लवन्यैरुपबृंहिता ।
असान्त्वयत्स्वयं भूमिं विधवां स्वां सखीमिव ॥ २६७ ॥

पूर्वोपकारस्मरणाच्छहमेराद्योऽखिलाः ।
तां प्राणमन्नमात्याः स्वाश्चान्द्रीमिव नवां कलाम् ॥ २६८ ॥

शमयन्त्या रजः सर्वं तापापहृतिदक्षया ।
तया निदाघवृष्ट्येव लताः संवर्धिताः प्रजाः ॥ २६९ ॥

---

264 $S'_4$ missing (cf. v. l. 1). —[ab]) K श्रीकटा.

265 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{2\cdot3}$ शाह्मेरो; B शम्हेरो.

266 $S'_4$ missing (cf. v. l. 1).

267 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_2$ बन्ध्व (mislec. for S'ār. धु) भावात् (submetric) (for °वाच्च). —[c]) D °न्त्वयन् (mislec. for S'ār. त् in conj. त्स्व°). —[d]) $S'_5$ after सखीमिव *int. lin. sec. m.* युग्मं.

—After 267 D B $S'_6$ marg. ins. :

13 * (B 303) सा राज्ञी शुक्लप्रतिपद्गीतभीता भवन्त्यथ ।
राजानं गुरुभिः स्वीयैश्चरमेष्टिमवापिपत् ।

268 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_5$ (before corr.) C पूर्वाप°. —[b]) $S'_{2\cdot3\cdot6}$ (after corr.) K D B शाहमेरा°. —[c]) $S'_{1-3\cdot5\cdot6}$ K C स्वां; D B स्वाश्च् (as in text).

269 $S'_4$ missing (cf. v. l. 1). —[b]) K °पह्य (mislec. for S'ār. हृ) ति–; $S'_{2\cdot6}$ °पह (S'₆ marg. हृ)ति-.

शङ्करात् स्वोदयभ्रंशशङ्किनी भट्टभिक्षणम् ।
तदुद्रेकविनाशार्थं मानं देवी निनाय सा ॥ २७० ॥

दुस्तरेषु महानीतिजलपूरेषु सा ततः ।
तत्प्रज्ञानावमारुह्य कार्यपारंपरं ययौ ॥ २७१ ॥

अन्तः सेहे न शङ्करस्तद्वृत्तं भिक्षणोदयम् ।
मानवन्तः सहन्ते हि च्छायासाम्यं कथञ्चन ॥ २७२ ॥

वर्त्स्यतो धूमतापादि लक्षणं जातवेदसः ।
धीमतोऽस्य न किञ्चित्तु रोषलिङ्गमलक्ष्यत ॥ २७३ ॥

छलाभिनीतरोगेण शहमेरेण धीमता ।
प्रत्यासन्नविनाशत्वमात्मनः समकथ्यत ॥ २७४ ॥

तस्यार्थप्रत्यवेक्षार्थमवतारादिभिः सह ।
व्यसर्जि कोट्या देव्या स श्रीमान् भट्टभिक्षणः ॥ २७५ ॥

---

270 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot3}$ शाङ्क°. —b) $S'_1$ भक्ष- (by syll. contam. for भट्ट-).

271 $S'_4$ missing (cf. v. l. 1). —a) $S'_{1-3\cdot6}$ C D B -भीति- (emended to नी° as in text with $S'_5$ K —c) $S'_5$ K आरुह्यु (sic). —d) $S'_2$ कार्यं; $S'_3$ B (evid. emend.) कार्ये.

272 $S'_4$ missing (cf. v. l. 1). —a) $S'_2$ शाङ्क°. —b) $S'_2$ तद्भट्टभक्ष° (for तद्वृत्तं भिक्ष°). —d) $S'_5$ न क (after *sec. m.* corr. कि)ञ्चन (marg. *sec. m.* कथञ्चन).

273 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot3\cdot5\cdot6}$ K C वर्तते; D B $S'_6$ marg. वत्स्यतो.

274 $S'_4$ missing (cf. v. l. 1). —a) $S'_2$ K च्छला°. —b) $S'_{2\cdot3}$ शाह°. —c) $S'_3$ °नाशि°. —d) $S'_2$ स्वात्मनः (for आत्मनः).

275 $S'_4$ missing (cf. v. l. 1). —a) $S'_1$ =तस्या*; $S'_{2\cdot3\cdot5}$ (marg. *sec. m.*) $_6$ (before corr.) C D [अ]थ (for [अ]र्थ). —c) R$S's_2$ कोजया.

खेदः कुपितपित्तस्य हितो नैवेतिवादिभिः ।
संप्रवेशान्न्यषिध्यन्त द्वाःस्थैस्तदनुयायिनः ॥ २७६ ॥

तौ भिक्षणावतारौ द्वौ तत्समीपमविक्षताम् ।
साङ्कस्यादिव तत्प्राणरक्षिण्यो देवता न तु ॥ २७७ ॥

अनुयुक्तामयोदन्तः स कालेन तयोर्निजैः ।
गात्रे न्यखानयच्छस्त्रीराधीन् स्वस्योदखानयत् ॥ २७८ ॥

सिराभिः शोणितं वाष्पं दृशाङ्गैः सकलैरसून् ।
तौ द्वावमुञ्चतां सद्यस्तद्द्वेषं स च चेतसा ॥ २७९ ॥

रक्तार्द्रव्रणदीपाङ्कपूर्णपात्राभतच्छिरः ।
रोगमोक्षोचितं स्नानं स तयोः शोणितैर्व्यधात् ॥ २८० ॥

भवन्नन्दनसंरक्षापरावेतावुभावपि ।
तयोरन्यतरं द्वारीकृत्यान्यमहरद्विधिः ॥ २८१ ॥

---

276 $S'_4$ missing (cf. v. l. 1). —a) $S'_6$ (marg.) C खेदः (for स्वे°); $S'_1$ पित(sic)स्य. —b) $S'_{2.5}$ (marg. *sec. m.*) $_6$ C नोवेति (for नैवेति).

277 $S'_4$ missing (cf. v. l. 1). —c) C सङ्क°.

278 $S'_4$ missing (cf. v. l. 1). —b) D B $S''_5$ marg. कालेथ; $S'_2$ निजः (sic); M (evid. emend.) निजाः. —d) $S''_2$ आची (mislec. for S'ār. धी)न्.

279 $S'_4$ missing (cf. v. l. 1). —a) CB शिराभिः.

280 $S'_4$ missing (cf. v. l. 1). —a) $S'_1$ त···व्रण- (blank with dots); $S'_{2.3.5.6}$ तदेव (emended to रक्तार्द्र- as in text with D B. Thus marg. in $S'_6$); $S'_2$ K -दीपाक- (K °त्क- mislec. for S'ār. ङ्क). —b) $S'_{2.3.6}$ C पात्रार्ध- (mislec. for S'ār. भ. Thus marg. in $S''_{3.6}$); $S'_5$ (after corr.) K -पात्रार्ध- (K °व- mislec. for S'ār. ध); $S'_2$ ते(sic) च्छिरः; K तश्छि mislec. for S'ār. च्छि)रः.

281 $S'_4$ missing (cf. v. l. 1). —c) $S'_{1-3.5.6}$ K C D B अन्यतमं (emended as in text). —c) $S''_{3.5}$ K द्वे(sic)धी (⌊mislec. for S'ār. री⌋ for द्वारी); $S'_6$ द्वा( marg. दू )री-.

प्रमीतनिजशोकोत्थतापशान्त्यै जडः परम् ।
परप्राणात्रोषवह्नौ प्रदीप्ते जुहुयादिति ॥ २८२ ॥

शह्मेरं रोद्धुकामां तां समर्थामपि दुर्धियः ।
कोटादेवीममात्याः स्वा नये बुद्धिं न्यवारयन् ॥ २८३ ॥

केदारमिव कुल्या सा पानीयेन महर्द्धिना ।
लोकमाप्याययामास साम्राज्योत्पलचन्द्रिका ॥ २८४ ॥

आज्ञाव्यतिक्रमाज्जातु कम्पनाधिपतिं प्रति ।
युयुत्सुरकरोद्यात्रां सामित्राब्जशशिप्रभा ॥ २८५ ॥

सङ्कटात्कम्पनेशस्तां कुलायादिव पक्षिणीम् ।
जीवग्राहं गृहीत्वाथ कारापञ्जरमानयत् ॥ २८६ ॥

मन्त्री कुमारभट्टाख्यस्तस्याः सचिवपुंगवः ।
तन्मोक्षसिद्धयेऽकार्षीत्तदामात्यैश्छलात्कलिम् ॥ २८७ ॥

राज्ञ्याः पुंभावमात्रेण भिन्नमाकारसन्निभम् ।
कमण्डलुकरं कंचित् सोऽधाद्विद्यार्थिनं शिशुम् ॥ २८८ ॥

---

282 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{1-3\cdot5\cdot6}$ K C -द्विज- (emended नि° as in text with D B) K शोका (sic)र्थ- ( mislec. for S'ār. त्थ). —[b]) $S'_2$ (by transp.)परं जडः. —[d]) $S'_2$ प्रदीप्तौ.

283 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_1$ शह्मेरो (emended as in text with $S'_{2\cdot3\cdot5\cdot6}$ K C D B); $S'_{2\cdot3}$ शाह्मेरं. —[b]) D समर्थाद् (mislec. for S'ār. म्); $S'_5$ K दुर्विं (mislec. for S'ār धि)यः. —[d]) $S'_2$ व्यधारयन् ; D °वारयत्.

284 $S'_4$ missing (cf. v. l. 1).

285 $S'_4$ missing (cf. v. l. 1). —[cd]) $S'_{2\cdot3\cdot5\cdot6}$ K C B यात्रामामि°.

286 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_5$ K तं (for तां). —[b]) $S'_2$ पक्षिणम्.

287 $S'_4$ missing (cf. v. l. 1).

288 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_5$ (before *sec. m.* corr.) D राज्ञः. —[d]) $S'_5$ (before *sec. m.* corr.) K सौधाद्; D B $S'_6$ marg. सह्रादाय मनोरमम्.

गत्वा स कम्पनाधीशं धीप्रशंसाविमण्डितः ।
सौष्ठवौदार्यसम्पत्तिशालिनीं वाचमभ्यधात् ॥ २८९ ॥

स्वशिरो मलिनीकृत्य जीवतां योषिदाज्ञया ।
पुरुषत्वं त्वया स्वामिन् कृतार्थीक्रियतेऽद्य नः ॥ २९० ॥

गत्वा त्वदाज्ञया कारां तस्यास्तर्जनसान्त्वनैः ।
धनं जनस्त्वदीयोऽयं स्वामिसात्कर्तुमिच्छति ॥ २९१ ॥

स्त्रीत्वादशक्ता दातुं सा समचैषीद्धनं यतः ।
व्यसृजत्कम्पनेशस्तं कारामेवं विमोहितः ॥ २९२ ॥

काराया निर्गमिष्यन्तीं देवीं कोटामिवेक्षितुम् ।
तत्कालमेव सन्ध्यागाज्जगद्रञ्जनकोविदा ॥ २९३ ॥

संध्यावंदनयोग्याम्बुवाहिना वटुना सह ।
असौ कारामविक्षच्च राज्याश्च निरगुः शुचः ॥ २९४ ॥

---

289 $S'_4$ missing (cf. v. l. 1).

290 $S'_4$ missing (cf. v. l. 1). —b) $S'_2$ जीवितां. —c) $S'_3$ gloss *pr. m. sup. lin.* हे (for स्वामिन्).
—After 290 D B $S'_6$ marg. ins.:

14* (B 327) स्त्रीत्वात्कातरचित्ताया दानभोगोत्सवद्विषः ।
राज्ञया बन्धुषु सैन्यान्तर्द्रविणं वर्तते महत् ।
[(l. 1) D कारचि° (sic); B कार-चि°; $S'_6$ (evid. emend.) साकारचि° (⌊for कार-चि° of B⌋ emended to कातर as above). —(l. 2) D राज्ञा (emended as above with B)].

291 $S'_4$ missing (cf. v. l. 1). —c) C $S'_5$ (marg. *sec. m.*) जयस् (for जनस्).

292 $S'_4$ missing (cf. v. l. 1). —a) $S'_1$ दा-सा (blank with dot). —c) $S'_{1\cdot3}$ (before corr.) $_{5\cdot6}$ K C (gram. assim.) तां (for तं. Thus marg. in $S'_5$).
—For 292 D B $S'_6$ marg. subst.:

15* (B 329) साध्यतां भवतास्मांश्च जानीयादुपकारिणः ।
इत्युक्त्वा कम्पनाधीशो व्यसृजत्तत्र तं ततः ।

293 $S'_4$ missing (cf. v. l. 1). —b) $S'_3$ कोटादेवीम्.

294 $S'_4$ missing (cf. v. l. 1). —c) $S'_{2\cdot5}$ K D °क्षश्च (mislec. for $S'$ār. च्च). —d) $S'_2$ राज्ञाश्च(sic); D राज्ञश्च; C $S'_5$ marg. *sec. m.* निरुगुः.

राज्ञीवेषभृतं तत्र स्थापयित्वा वटुं स तम् ।
तद्वेषधारिणीं कोटामन्वादाय विनिर्ययौ ॥ २९५ ॥

रक्षितारोऽपि नाजानंस्तद्यावत्तावदेव सा ।
कम्पनाधिपतिं चक्रे स्वचक्रेभशकृत्करिम् ॥ २९६ ॥

सान्वशोत कुमारेण मोचिता भट्टभिक्षणम् ।
एकदन्तहतारेः किं नान्येनेभमुखाद्भयम् ॥ २९७ ॥

तयानपोदितोऽप्यौज्झि शह्मेरो नैव शङ्कया ।
कृतवैराः समर्थेन प्राज्ञा नैव ह्युदासते ॥ २९८ ॥

न प्रासीदन्न चाकुप्यत् तस्मिन्सा बलशालिनि ।
घृणा प्रमादसहिता विनाशप्रथमाङ्कुरः ॥ २९९ ॥

---

295 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot3\cdot6}$ C D -वेश-. —c) $S'_2$ °वेशा°; $S'_{3\cdot6}$ C D °वेश- (for °वेष-). —d) $S'_{1\cdot5\cdot6}$ C अन्वाधाय (emended as in text with $S'_{2\cdot3}$ K D B).

296 $S'_4$ missing (cf. v. l. 1).

297 $S'_4$ missing (cf v. l. 1). —a) $S'_1$ सा···नुक° (blank filled as in text with D B); $S'_{2\cdot3\cdot6}$ C सा ब्राह्मण- (for सान्वशोत. Thus marg. in $S'_6$); $S'_5$ K स ($S'_5$ after *sec. m.* corr. सा) ब्राह्मणः ($S'_5$ after *pr. m.* corr. °ण-). —b) M (evid. emend.) शोचिता (for मो°); $S'_{2\cdot3\cdot5\cdot6}$ K C -भिक्षणात् (gram. assim.). —c) $S'_2$ एका (for °क-); D -दत्त- (mislec. for S'ār. न्त-). —d) $S'_{2\cdot3\cdot5\cdot6}$ K C भवेत् (for भयम्. Thus marg. in $S'_6$).

298 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot3}$ K तथा° (for तया°); $S'_3$ K तयोदिता (sic); D B °पोषिता; $S'_6$ पोयि (after corr. षि)ता; $S'_2$ °थेक्षि (for °प्यौज्झि). —b) $S'_{2\cdot3}$ शाह्मेरो. —c) $S'_5$ (before corr.) K -वैरः.

299 $S'_4$ missing (cf. v. l. 1). —a) $S'_2$ प्रसी°.
—After 299 D B $S'_6$ marg. ins. :

16* (B 337) देव्या वासं विमुञ्चन्त्यास्तस्या धनरसाश्रयम् ।
शह्मेरे विषवल्लीव द्रोहधीरभ्यवर्धत ।
(B 338) वर्धनोऽन्यतरस्याभूत्पक्षोऽन्यस्य क्षयावहः ।
कोटाशह्मेरयोरस्ति क्षितिमारुतयोरिव ।

जयापीडपुरं यान्त्यां तस्यां कार्यानुरोधतः।
शह्मेरो बली जातु नगरं स्वीचकार सः ॥ ३०० ॥

तस्मिन्नवन्यलोकेन गृहीताङ्गे बलीयसि।
राज्ञी समवृणोत् कोट्टद्वारं सह जयाशया ॥ ३०१ ॥

निरुद्धे बलिना कोट्टगुहाग्रे मतिशालिना।
नृसिंहेनाभजत् कोटा सृगालीव मुहुर्भयम् ॥ ३०२ ॥

सिंहासने मया साकं श्रिया साकं ममोरसि।
क्षमया सह चित्ते मे राज्ञी निविशतां स्वयम् ॥ ३०३ ॥

तामेवमादिसन्देशैर्मुग्धां संमोह्य यत्नतः।
हस्ते चकार कोट्टक्ष्मां कोटादेवीं च बुद्धिमान् ॥ ३०४ ॥

एकस्मिञ्शयने रात्रिमतिवाह्य तया समम्।
स प्रातरुत्थितो जातु तीक्ष्णैर्देवीमरोधयत् ॥ ३०५ ॥

---

300 $S'_4$ missing (cf. v. l. 1). —c) $S'_{2\cdot3}$ शाह°.

301 $S'_4$ missing (cf. v. l. 1). —d) DB जय (B या) श्रिया.
—After 301 D B $S'_6$ marg. ins. :

17* (B 341) निवृत्तनेत्रचारस्य चपलत्वैककारणम्।
आखुर्बिलगतो वोतोः शह्मेरस्य साभवत्।

302 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot5}$ K C कोट ($S'_5$ K °टा–).
—b) $S'_{2\cdot3\cdot5.6}$ K C -गुहाभ्रे (mislec. for S'ār. ग्र. Thus marg. in $S'_6$): D B $S'_6$ marg. (alliterative) शौर्य– (for मति–).
—d) C B शृगा°.
—After 302 D B $S'_6$ marg. ins. :

18* (B 343) तुङ्गत्वं मङ्गलासङ्गमभङ्गुरतराश्रियम् ।
राज्याङ्गैश्च निजाङ्गैश्च दत्वै राज्ञी करोतु मे ।
(B 344) अध्यशेततरां राज्ञी मत्पुत्राणां न केवलम् ।
प्राणानामपि चैश्वर्यं श्लाघ्या सुखपरम्परा ।
[(l.4) M (evid. emend.) ऐश्वर्यं].

303 $S'_4$ missing (cf. v. l. 1). —b) D B सार्धं (for °कं).

304 $S'_4$ missing (cf. v. l. 1). —a) $S'_3$ C °दिशन् दे° (for °दिसन्दे°).
—c) D कोट–. —d) $S'_5$ after बुद्धिमान् *sec. m. int. lin* युग्मं.

305 $S'_4$ missing (cf. v. l. 1). —c) $S'_2$ om. उत्थितो.

वर्षे पञ्चदशे शुक्लदशम्यां नभसस्ततः ।
तारेव नभसो राज्याद्राज्ञी भ्रंशमलब्ध सा ॥ ३०६ ॥

तत्पुत्रावपि तौ द्वौ स करणीयविचक्षणः ।
बबन्ध बन्धुसम्बन्धिकल्पवृक्षो भटाग्रणीः ॥ ३०७ ॥

स्वं रूपं चिदचिद्भिरेभिरभितो व्यञ्जत्स्वयं निर्मितै-
र्यस्योन्मीलति देशकालकलनाकल्लोलितं तन्महः ।
आत्मा वास्तु शिवोऽस्तु वास्त्वथ हरिः सोऽप्यात्मभूरस्तु वा
बुद्धो वास्तु जिनोऽस्तु वास्त्वथ परस्तस्मै नमः कुर्महे ॥३०८॥

भियं लवन्यलोकेषु कीर्तिं दिक्षु महीं भुजे ।
लक्ष्मीं वक्षसि कोटां च कारायां स ततो न्यधात् ॥ ३०९ ॥

नीत्वावस्थान्तरं दौःस्थ्यशमात्कश्मीरमण्डलम् ।
श्रीशंसदेन इत्याख्यामन्यां स्वस्य व्यधान्नृपः ॥ ३१० ॥

---

306 S′$_4$ missing (cf. v. l. 1). —d) S′$_2$ राज्ञो (sic).

307 S′$_4$ missing (cf. v. l. 1). —c) D B S′$_6$ marg. -संङ्कल्प- (for -सम्बन्धि-). —d) S′$_2$ after भटाग्रणीः (figure) 14 (to denote Koṭā Devī 14[th] ruler).

308 S′$_4$ missing (cf. v. l. 1). —a) S′$_{1\text{-}3\cdot5\cdot6}$ (before corr.) K D B व्यञ्जन् (mislec. for S′ār त् in conj. °त्स्व°). —b) D B S′$_6$ marg. -निष्कीलितं (for कल्लो°); S′$_6$ यन्° (for तन्°); S′$_2$ °मनः (for °हः). —c) S′$_2$ words beginning with वास्त्वथ in 308[c] and ending with जिनोऽस्तु in 308[d] om. hapl. —d) S′$_1$ °स्तु वा……तस्मै (blank filled as in text with D B); S′$_{2\cdot3\cdot5\cdot6}$ K C (भगवते for [अ] स्त्वथ परस्); B तमै (sic); S$_{1\text{-}3\cdot5\cdot6}$ K C कर्मणे (emended as in text with D B).

309 S′$_4$ missing (cf. v. l. 1). —a) S′$_2$ लवन्यालोकेन (sic). —b) S′$_{5\cdot6}$ (after corr.) K D B मही. —d) S′$_{1\cdot2\cdot5\cdot6}$ K C D B न्य (mislec. for S′ār. न्य)धात्.

310 S′$_4$ missing (cf. v. l. 1). —c) D B -शंश (B स)दीन-.
—After 310 D B S′$_6$ marg. ins. :

19* (B 353) राजा सतीसरःक्षोणिशुक्तिमुक्तामणिस्ततः ।
अर्थिचिन्तामणिर्वैरिरत्नवज्रमणिर्बभौ ।
[(1.2) D B अर्थ- (emended as above with M)].

महावने भुजे तस्य काष्ठोद्दीपनशालिनः ।
मौर्वीकिणाः प्रतापाग्नेरधूमायन्त सन्ततम् ॥ ३११ ॥

अहरन्मन्त्रिणां राजा संशयं न तु तस्य ते ।
भिनत्त्यन्यान्मणीन्वज्रो नान्यरत्नानि तं पुनः ॥ ३१२ ॥

स राजा राजतो राजस्थानीयान् काष्ठवाटगान् ।
भयात्ततोऽपि विद्राव्य श्लाघनीययशा बभौ ॥ ३१३ ॥

---

311 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{2\,3\cdot5\cdot6}$ C -वले (for -वने). —[b]) D काष्टादीपन– (sic); K -शालिना (sic); D (gram: assim.) -शालिनि. —[c]) $S'_{2\cdot3\cdot6}$ C B -किण:; D किणा; (sic). —[d]) $S'_{3\cdot6}$ K D अधूमायत्त (K त्तु) (mislec. for S'ār. न्त); C $S'_5$ (marg. *sec. m.*) °त्तु; B (evid. emend.) $S'_6$ (after corr.) °त (for °न्त); $S'_2$ अधूमयत्; $S'_2$ [अ]नन्तरम्; $S'_3$ सन्तरस् (sic) (for सन्ततम्).

312. $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{1-3\cdot5\cdot6}$ (before corr.) K C प्रा(mislec. for S'ār. अ)हरन्.

—After 312 D B $S'_6$ marg. ins.:

20* (B 356) राज्याधिकारानखिलान्स्त्रीभावाद् दुःसहान्स्वयम् ।
येषु विश्वासपात्रेषु श्रीकोटा स्वयमार्पिपत् ।
(B 357 ab) तेजो महिम्नेव रविस्तमांसीव गुहान्तरात् ।
[(l.1) D B °सहात् (mislec. for S'ār. न् in conj. न्स्व)].

313 $S'_4$ missing (cf. v. l. 1). —[a]) D B $S'_6$ marg. क (B $S'_6$ का) ष्ठवाटान्नृपो (for स राजा राजतो); $S'_2$ रजतो (for रा°). —[b]) D B °यात् (mislec. for S'ār. न् in conj. °न्का°); B °वाटगात् (sic); D कर्षति स्म तान् (for काष्ठवाटगान्). —D repeats 313 [ab] with readings as in text. —[c]) $S'_2$ क (sic) यात् (for भ°).

—After 313 D B $S'_6$ marg. ins.:

21* (B 358 *a-h*) यत्र सन्ध्यातपस्येव लवन्यैरितामिरैरिव ।
अरोधि रुचिसञ्चारः स्वामिनो बलशालिभिः ।
कश्मीरमण्डलं चण्डशौर्यदण्डितविद्विषा ।
क्रमागतमिवाशेषं क्षणात्तेन वशीकृतम् ।
(B 359) हृत्वेव हृदयात्कम्पं सम्पदापि तदा स च (?) । [5]
वामेतरेण लोकस्य बाहुना नयनेन च ।

*[(l. 6) B बहुना]*.

चिरं धुरं परिन्यस्य पुत्रयोः स्वादनूनयोः ।
नयोच्छ्रितयशा राज्यसुखं भुङ्क्ते स्म भूपतिः ॥ ३१४ ॥

सपञ्चवासरान् भुक्त्वा त्रीनब्दान्मेदिनीपतिः ।
अष्टादशेऽब्दे राकायामाषाढ्यां स व्यपद्यत ॥ ३१५ ॥

अथ प्रथमसामन्तैः सम्मताज्ञः स जंसरः ।
सतीसरःक्षिते रक्षामक्षामश्रीरटङ्कयत् ॥ ३१६ ॥

राज्यतोरणसंवाहस्तम्भाभ्यां धरणीपतेः ।
अनुजो बलबुद्धिभ्यामगमच्छङ्कनीयताम् ॥ ३१७ ॥

नैव दानं न चादानं निग्रहं नाप्यनुग्रहम् ।
विहारं न न चाहारं राज्ञो न्यूनं स हि व्यधात् ॥ ३१८ ॥

प्राग्वाद्विश्वाससम्पत्तिमकुर्वति महीभुजि ।
युवराजो मनाक्चक्रे निकटस्थैर्विरक्तधीः ॥ ३१९ ॥

---

314 S′$_4$ missing (cf. v. l. 1). —c) S′$_{2\cdot6}$ C B राज्यं (for °ज्य–).

315 S′$_4$ missing (cf. v. l. 1). —a) P T मुक्त्वा (for भु°), *See* NOTES. —d) S′$_2$ after व्यपद्यत (figure) 15 (to denote S′āha Mīra 15th ruler).

316 S′$_4$ missing (cf. v. l. 1). —a) D B -सामन्त- —b) S′$_{2\cdot3\cdot5\cdot6}$ K B ज्यंश (S′$_2$ शि)रः; D जंशरः. —c) S′$_5$ (before corr.) K ·क्षिती.

317 S′$_4$ missing (cf. v. l. 1). —d) S′$_3$ अगच्छ ( *pr. m. sup. lin.* म)त्.

318 S′$_4$ missing (cf. v. l. 1). —a) D नैवा° (for नैव). —b) D च (for न). —d) D नूनं (for न्यूनं).
—After 318 D B S′$_6$ marg. ins. :

22* (B365) विद्याप्रणयविज्ञानप्रज्ञातिशयशालिनः ।
युवराजान्महाराजो वयसैवाधिकोऽभवत् ।
[(l. 1) M (evid. emend.) -विनय- (for -प्रणय-); B -विज्ञात- (mislec. for Dev. न-)].

319 S′$_4$ missing (cf. v. l. 1).

तद्भ्रमनस्यवृत्तान्तश्रवणच्छिद्रलाभतः ।
युवराजं ततो राजस्थानीयाः प्रापुरञ्जसा ॥ ३२० ॥

आगते विग्रहे व्यक्तिं राजस्थानीयसंश्रयात् ।
सोऽगादवन्तिनगरं तन्मूलस्थानमुद्धतः ॥ ३२१ ॥

अथोत्पलपुरं राजा भटैः सह रणोद्भटैः ।
अशिश्रियदिदं भ्रातुर्वाचिकं च विसृष्टवान् ॥ ३२२ ॥

दुर्जनप्रेरणात्त्वं चेन्मत्स्नेहं नाभ्यजीगणः ।
लोकापवादज्वरतः कथं कम्पो न जायते ॥ ३२३ ॥

अन्योन्यपालनायाज्ञां राज्ञस्त्रिदिवगामिनः ।
पालनीयामनुध्याय प्रत्यानय दयां मयि ॥ ३२४ ॥

इति सन्दिश्य दूतं च व्यसृजत्स नरेश्वरः ।
कम्पनाधिपतिं हन्तुं व्यसृजच्च निजात्मजम् ॥ ३२५ ॥

मृगयां युवराजोऽगादिति दूतं निरोधयन् ।
भ्रातृपुत्रं निहन्तुं च श्रुतद्रोहोऽगमच्च सः ॥ ३२६ ॥

दूतः किमिति नायातः कालो हि सुचिरं गतः ।
इति चिन्ताकुलो लक्ष्मभट्टो राजान्तिकं ययौ ॥ ३२७ ॥

ऊचे च जाने स द्रोहं लक्षयित्वा तवानुजः ।
त्वत्पुत्रमारणायागाद् यद् दूतस्य चिरागमः ॥ ३२८ ॥

---

320 $S'_4$ missing (cf. v. l. 1). —[d]) $S'_{1-3\cdot5\cdot6}$ K C प्राहुर् (emended as in text with D B. Thus marg. in $S'_6$).
321 $S'_4$ missing (cf. v. l. 1).
322 $S'_4$ missing (cf. v. l. 1).
323 $S'_4$ missing (cf. v. l. 1). —[c]) $S'_{1\cdot3\cdot5}$ K अशिश्र (sic) यत्.
324 $S'_4$ missing (cf. v. l. 1).
325 $S'_4$ missing (cf. v. l. 1). —[c]) D हर्तुं (mislec. for S'ār. न्तुं). —[d]) $S'_5$ after निजात्मजं *sec. m. int. lin.* युग्मं.
326 $S'_4$ missing (cf. v. l. 1). [b]) $S'_2$ न्यरोधयत्.
327 $S'_4$ missing (cf. v. l. 1).
328 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_2$ शजानं (mislec. for S'ār. च जाने).

स्नाति भुङ्क्ते स्वपित्येव युवराज इति च्छलात् ।
त्वदुद्योगनिषेधाय नूनं रुद्धो वचोहरः ॥ ३२९ ॥

तदवन्तिपुरं तस्मिञ् श्रीदेवसरसं गते ।
सद्यो निःस्वामिकं हन्मो जयोऽस्माकं ततो ध्रुवः ॥ ३३० ॥

अथावन्तिपुरं गत्वा सत्त्वातिशयशालिना ।
राज्ञा युद्धं तथाकारि तद्भटैरुद्भटैः समम् ॥ ३३१ ॥

अल्लेश्वराय भृत्यानां वधं नूनं निवेदितुम् ।
वितस्ता शवरुद्धौघा प्रतीपमगमद्यथा ॥ ३३२ ॥

भ्रातृपुत्रं पराभूय तावदल्लेश्वरे द्रुतम् ।
व्यावृत्ते रणखेदार्तः प्रपलायत जंसरः ॥ ३३३ ॥

---

329 $S'_4$ missing (cf. v. l. 1). —a) $S'_{1-3}$ K C स्वपति (emended as in text with $S'_{5.6}$ D B. Thus after corr. in $S'_3$). —c) $S'_5$ (before corr.) K स्व (mislec. for S'ār. त्व) दु (K मु mislec for S'ār. दु) द्योग–. —d) D नु (mislec. for S'ār. रु) द्धो.

330 $S'_4$ missing (cf. v. l. 1). —a) $S'_2$ °पुरे (mislec. for S'ār. ं). —b) C -सङ्ग– (by padanta-sandhi for °सं ग°) ते. —d) $S'_3$ (before corr.) ध्रुवम्.

331 $S'_4$ missing (cf. v. l. 1). —b) $S'_2$ C मत्वा (mislec. for S'ār. सत्त्वा°). —b) $S'_2$ (evid. emend.) -निश्चय– (for °तिशय–). —c) $S'_{3.6}$ C रुद्धं (for यु°); D तदा° (for तथा°).

332 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2.6}$ अल्लेशि ($S'_6$ marg. as in text) राय. —b) $S'_2$ वधे (mislec. for S'ār. धं).

333 $S'_4$ missing (cf. v. l. 1). —b) $S'_{2.6}$ अल्लेशि ($S'_6$ marg. as in text) रे; $RSs_2$ आल्लंशरे. —c) K B व्यावृत्त–; $S'_{3.5}$ (after corr.) K C D B -खेदान्तः (mislec. for S'ār. र्तः). —d) D B प्रापला°; $S'_{2.6}$ B ज्यंशि (B $S'_6$ श)रः; $S'_5$ (after corr.) जंशरः.
—After 333 D B $S'_6$ marg. ins.:

23* (B 381) दीपस्येव शिखा ध्वान्ते यस्य धीरापदि स्फुरेत् ।
स रत्नं रत्नजातेश्च पाषाणेभ्यः किमन्तरम् ।
(B 382) समाधित्सत भेदाय कञ्चित्कालं स वैरिणा ।
अमोघा दूरगा बुद्धिः शरत्राण्यप्यतिवर्तते ।
[(l. 3) D B वैरिणम् (emended as above with M). —(l. 4) D B शास्त्रा° (emended as above)].

आवयोर्नैव कर्तव्यः कलिर्मासद्वयीमिति ।
राज्ञा स संविदं चक्रे धीमानह्लेश्वरस्ततः ॥ ३३४ ॥

प्रतिमुच्य निजान् योधानवन्तिपुरमुत्सृजन् ।
अथ क्षीरीपथेनासावह्लेशोऽगमदिक्षिकाम् ॥ ३३५ ॥

नगरीरक्षतां न्यस्य सथ्यराजे स्वमन्त्रिणि ।
क्रमराज्यं विराजच्छ्रीजैंसरश्चागमत्तदा ॥ ३३६ ॥

दानमानौ प्रतिश्रुत्य सय्यराजं विभिन्दता ।
युवराजेन नगरी स्वीकृता मन्त्रयुक्तिभिः ॥ ३३७ ॥

नामराजतया दुःखं भुक्त्वा कश्मीरमण्डले ।
मासद्वयोनौ द्वौ वर्षाववसानमगान्नृपः ॥ ३३८ ॥

जानन्नलावदेनोऽथ तं कालं कलहाक्षमम् ।
द्वारैश्वर्यं ददौ भ्रातुः सद्यो विघ्ननिवृत्तये ॥ ३३९ ॥

---

334 $S'_4$ missing (cf. v. l. 1). —a) $S'_{1-3.5.6}$ K C अनयोर् (emended as in text with D B. Thus marg. in $S'_6$).
— After 334ab D ins. :
24* प्रत्यश्रावयदह्लेशो लेखैर्दूतमुखेग्रज ।
—c) $S'_1$ (after corr.) $_{3.5}$ (after corr.)$_6$ K C B समं विदांचक्रे (for स संविदं चक्रे); $S'_2$ राज्ञां समं (last akṣara struck out) विदांचक्र.
—d) $S'_2$ अह्लेशिरस् ; $RSs_2$ आलंशरो.
335 $S'_4$ missing (cf. v. l. 1). —a) D B -मोच्य. —c) K -पथो(sic)
न; $S'_3$ -पतेन (for -पथेन). —d) $S'_{2.3}$ C B ईक्षि ($S'_{2.3}$ क्ष) काम् .
336 $S'_4$ missing (cf. v. l. 1). —a) $S'_6$ नगरीं; $S'_3$ रक्षितां; $S'_{1.2.5}$
K C -रक्षिता (emended as in text with D B $S'_6$). —b) $S'_{3.5}$
(after *sec. m.* corr.) $RSs_2$ सुय्य–; M (evid. emend.) स्वय्य–.
—d) D B जं(B ज्यं) शरश्च ; $S'_2$ ज्यंशिरश्च्.
337 $S'_4$ missing (cf. v. l. 1). —a) $S'_3$ -मानैः. —b) $S'_2$ सथ्य–;
$S'_5$ सु (before *sec. m.* corr. as in text) य्य– ; M (evid.
emend.) स्वय्य–; $S'_3$ सुय्यराज्यं (after corr. as in text).
338 $S'_4$ missing (ct. v. l. 1). —b) $S'_3$ (before corr.) काश्मीर–.
—d) $S'_2$ after अगान्नृपः (figure) 16 (to denote Jaṁsara
16th ruler).
339 $S'_4$ missing (cf. v. l. 1). —a) $S'_2$ $RSs_2$ अलाभ°; D °दीनो.
—d) D B $S'_6$ marg. ततो वैर– (for सद्यो विघ्न–).

सलिलोत्तरणोपायं सेतुं सुय्यपुरे व्यधात्।
विपत्संतरणोपायं न पुनर्जंसरोऽस्मरत् ॥ ३४० ॥

पथिकानां निवासाय तेन पर्वतसीमनि।
कक्ष्याविभागसहितः स्वनाम्ना रचितो मठः ॥ ३४१ ॥

एवं विक्रमनीतिभ्यां देशं शोधयतो निजम्।
श्रीशिरःशाटको राज्ञो द्वारैश्वर्यमवाप्तवान् ॥ ३४२ ॥

राजपुत्रः स वाक्पुष्टाटवीं लीलारसादटन्।
योगिनीचक्रमद्राक्षीत् कदाचिद्गिरिगह्वरे ॥ ३४३ ॥

---

340 S′$_4$ missing (cf. v. l. 1). —a) S′$_{2\cdot3}$ C anusvāra om. in °पायं. —b) S′$_6$ सु (*sup. lin.* स) य्य–; D B स्व(B स)य्य–. —c) S′$_2$ after 340c repeats 340bc. —d) S′$_2$ ज्यंशिरो; D B, जं(B ज्यं) शरो.

341 S′$_4$ missing (cf. v. l. 1). —a) S′$_1$ निवा(illeg.)सा°. —d) S′$_6$ (evid. emend.) रचितं (marg. °तो); S′$_2$ मधः (mislec. for S′ār. ठः); S′$_{3\cdot6}$ C सरः (mislec. for S′ār. मठः. Thus marg. in S′$_6$). —After 341 D B S′$_6$ marg. ins. :

25* (B 391) कपटापत्रपारोपाद्राज्ञः प्राप्तविभीषकः।
स्वयं द्वारं त्यजन्सोऽगाद् ग्रामं ज्येष्ठेश्वराभिधम्।

[(1.2) D ज्येष्टे°].

342 S′$_4$ missing (cf. v. l. 1). —a) S′$_{2\cdot3\cdot6}$ C विभ्र (S′$_6$ *sup. lin.* क्र) म–; S′$_5$ K -भीति° (for -नीति°. Thus marg. *sec. m.* in S′$_5$). —c) S′$_1$ -शिर···को (blank filled as in text with D B); S′$_{2\cdot3\cdot6}$ C -शिवस्वामिको (S′$_6$ marg. as in text); S′$_5$ K -शि···को (blank with dots; in S′$_5$ blank filled later *sec. m.* : वस्वामि). —After 342 S′$_{2\cdot6}$ ins. :

26* तस्य राज्ञोऽभवत्पुत्रो नाम्ना शाहाभदेनकः।
बलबुद्धिक्षमाशौर्यमन्त्रोत्साहगुणैर्युतः ।

[(1.1) S′$_6$ °दीनकः. – (1.2) S′$_6$ तेजो– (for बल–). S′$_6$ reads (marg.) अन्यादर्शेप्तत्रुषि (sic) नूनं स्यात्].

343 S′$_4$ missing (cf. v. l. 1). —a) S′$_5$ वाक्सुष्टा°. —d) S′$_3$ -गुह्वरे.

उदयश्रीस्तथा चन्द्रडामरश्चास्य बल्लभौ ।
अपश्यतां न किं लभ्यं महतामनुयानतः ॥ ३४४ ॥

अचलंल्लाडनादण्डा घण्टानां चण्डटाङ्कृतम् ।
मनांसि न पुनस्तेषां वीराणां साहसस्पृशाम् ॥ ३४५ ॥

मान्तर्धासिषुरेवैताः प्रष्टुं द्रष्टुं च काङ्क्षिताः ।
इति तेऽश्वादवारोहन् प्रवीरा नतु तद्भयात् ॥ ३४६ ॥

शनैः शनैस्ततो यान्तो मौनपूर्वं महाशयाः ।
योगिनीनिकटं प्रापुर्विकटप्रकटौजसः ॥ ३४७ ॥

योगिनीनायिका दूरात् परिज्ञाय नृपात्मजम् ।
साशिषं शीधुचषकं प्राहिणोन्मन्त्रितं ततः ॥ ३४८ ॥

---

344 $S'_4$ missing (cf. v. l. 1). —b) $S'_2$ (gram. assim.) -डामरौ (for -डामरश्च्). —c) $S'_{1\cdot5}$ K om. लभ्यं, (supplied with D B as in text); $S'_{2\cdot3\cdot6}$ C तेषां (for लभ्यं. Thus marg. in $S'_6$).

345 $S'_4$ missing (cf. v. l. 1). —a) $S'_{1-3\cdot5\cdot6}$ K C B (gram. assim.) अचलल् (for °न्); $S'_2$ लात (mislec. for S'ār. ड)ना–; $S'_{1-3\cdot5\cdot6}$ K C B -दण्ड– (emended as in text with D). —b) $S'_2$ -चण्डानां (for घण्टानां); D -टांकृतात्.

—After 345 D B $S'_6$ marg. ins. :

27* (B 396) घटिताशातटं स्वाट्टहाससंवाहनादिभिः ।
योगिन्यो डमरुध्वानैर्भयादिव चलैर्बभुः ।

[(l.1) D anusvāra om. in -तटं ].

346 $S'_4$ missing (cf. v. l. 1). —a) K [अ]न्तर्वा (mislec. for S'ār. र्धा)सि°. —b) $S'_5$ (before corr.) K काङ्क्षितः. —d) $S'_5$ (before corr.) K नन्तु (for नतु).

347 $S'_4$ missing (cf. v. l. 1).

348 $S'_4$ missing (cf. v. l. 1). —a) $S'_{2\cdot3\cdot5\cdot6}$ (before *sec. m.* corr.) K C -नायका (K °का). —c) $S'_5$ साशि (marg. *sec. m.* मि)षं, thus सामिषं indicated, which reading requires consideration; B सीधु–.

चन्द्रस्तदमृतं तृप्तिभाजा राज्ञावशेषितम् ।
उदयश्रीमुखापेक्षी न संतृप्तस्त्वशेषयत् ॥ ३४९ ॥

भवितव्यबलादश्वपालं सपदि विस्मरन् ।
उदयश्रीरशेषं तत्पीत्वा तृप्तिं परामगात् ॥ ३५० ॥

आश्चर्याऽतृप्तनेत्रेषु तेषु तृप्तेषु योगिनी ।
निमित्तज्ञाऽवदद्राजपुत्रं बद्धाञ्जलिं ततः ॥ ३५१ ॥

अखण्डं भावि ते राज्यं चन्द्रस्त्वद्विभवांशभाक् ।
आजीवमुदयश्रीश्च मण्डितोऽखण्डया श्रिया ॥ ३५२ ॥

अश्वपालस्त्वसावस्मदनुग्रहविवर्जितः ।
अचिरेणैव कालेन नूनं प्राणैर्वियुज्यते ॥ ३५३ ॥

भविष्यत्सूचयित्वैवं योगिनीभिः समन्विता ।
सान्तर्दधे पुरः प्राणाः पश्चात्तुरगपालिनः ॥ ३५४ ॥

अविचारतमोमग्नान् जन्तूनुद्धर्तुमीश्वराः ।
सम्भवन्ति प्रजापुण्यैः प्रकाशोत्कर्षहेतवः ॥ ३५५ ॥

श्वशुराद्धर्तृभागं यदवीरा पुंश्चली वधूः ।
हरन्त्यासीत्स तं राजा दुराचारं न्यवारयत् ॥ ३५६ ॥

---

349 $S'_4$ missing (cf. v. l.1). —d) $S_{1-3\cdot5\cdot6}$ K C सं ($S'_{2\cdot3}$ स) तृप्तिमशे° (emended as in text with D B. Thus marg. in $S'_6$).

350 $S'_4$ missing (cf. v. l. 1). —b) $S'_5$ (before corr.) K संपदि. —c) C अशेषन्त (by padānta-sandhi for °षं त)त्.

351 $S'_4$ missing (cf. v. l. 1). —a) $S'_{1-3\cdot5}$ K C आश्चर्य (emended as in text with D B)तृ°; $S'_6$ आश्चर्यतृप्ति- (marg. °र्यातृप्त-).

352,353 missing (cf. v. l. 1).

354 $S'_4$ missing (cf. v. l. 1). —c) $S'_1$ पुनः (mislec. for S'ār. रः). —d) $S'_5$ (before corr.) K -मालिनः.

355 $S'_4$ missing (cf. v. l. 1). —c) $S'_5$ (before corr.) K प्रजाः.

356 $S'_4$ missing (cf. v. l. 1).

—After 356 D B $S'_6$ marg. ins. :

ग्रीष्मार्के द्यौरिवान्यर्तूंस्त्राज्ञोऽतीत्य बहून्महीं ।
ध्रुवमापज्जयापीडमेतं ननु स किल्बिषी ॥ ३६२ ॥

पूर्वे परे च भूपाला नायकेनेव भूषिताः ।
क्ष्मानायकेन तेनाथ मुक्तागुणलसच्छ्रिया ॥ ३६३ ॥

तदीयो जयलक्ष्मीभिः प्रविष्टाभिः पदे पदे ।
न प्रतापानलोऽतृप्यत् सरिद्भिरिव सागरः ॥ ३६४ ॥

जयं विना गणयतः क्षणमात्रं वृथा गतम् ।
वृद्धस्य तरुणीवाभूद्यात्रा तस्यातिवल्लभा ॥ ३६५ ॥

न मृगाक्षी न वा शीधुपानलीला न चन्द्रिका ।
यात्रैव केवलं तस्य भूमिभर्तुर्मनोऽहरत् ॥ ३६६ ॥

न तापो न हिमं तस्य न सन्ध्या न निशा तथा ।
न क्षुन्न वा पिपासा च राज्ञो यात्रामविघ्नयत् ॥ ३६७ ॥

न सरिद्दुस्तरतरा दुरारोहो न पर्वतः ।
दुर्लङ्घ्यो न मरुश्चाभूद्यात्रायां मानिनः प्रभोः ॥ ३६८ ॥

---

29* (B 416) श्रीमान् शाहाबदीनोऽथ प्राज्यं साम्राज्यमग्रहीत् ।
येन राजन्वती भूर्यामहसत्तद्यशोमिषात् ।

362 $S'_4$ missing (cf. v. l. 1).

363 $S'_4$ missing (cf. v. l. 1). —[b]) K B $S'_6$ (after corr.) [ए]व (for [इ] व). —[c]) C [अ] था° (sic); —[d]) $S'_1$ D °च्छि (D छ्रि)यः (sic).

—After 363 D B $S'_6$ marg. ins. :

30* (B 419) सिन्धौ वाडवतप्ताम्बुन्यपि बिम्बितमम्बरम् ।
यत्प्रतापाग्नितापार्तं मज्जतीव दिवानिशम् ।

364 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_2$ तदीय– .

365 $S'_4$ missing (cf. v. l. 1).

366 $S'_4$ missing (cf. v. l. 1). —[a]) B सीधु– .

367 $S'_4$ missing (cf. v. l. 1). —[a]) C हिमन्त (by padānta-sandhi for °मं त) स्य.

368 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_5$ (before corr.) K द्वारा° (for दुरा°). —[c]) D दुर्लंघो; C मरुच्चां (mislec. for S'ār. श्चां).

अजितां पूर्वभूपालैः पारिसीककुलाकुलाम् ।
उत्तराशां विजेतुं स प्रस्थानं प्रथमं व्यधात् ॥ ३६९ ॥

जगतां विजयी कामो मधुशीधुवधूरिव ।
चन्द्रलौलकशूरान् स सहायत्वेऽवृणोत्प्रभुः ॥ ३७० ॥

सैन्यचेतांसि सत्त्वेन तमसा स्वविरोधिनः ।
अपूरयत्स रजसा दिगन्तानुद्धतान्तकः ॥ ३७१ ॥

प्रविष्टं तस्य गोविन्दखानपालनशालिनि ।
उदभाण्डपुरे पूर्वं बाणैस्तदनुसैनिकैः ॥ ३७२ ॥

शैलशृङ्गं नृपानीके प्राप्ते तस्य विरोधिभिः ।
भयातुरैरवारोहः शृङ्गात्तुङ्गाद्व्यधीयत ॥ ३७३ ॥

सदृशं प्राभृतं दातुमसमर्थोऽस्य सिन्धुपः ।
उपदीकृतवान् कन्यारत्नं त्राणाय भूपतेः ॥ ३७४ ॥

राज्ञस्तु गौरवं बाहौ गान्धाराणां भुवोढया ।
चित्रं तु लाघवं तेषां भये भारानुषङ्गतः ॥ ३७५ ॥

---

369 $S'_4$ missing (cf. v. l. 1). —a) M (evid. emend.) अंजितां. —b) $S'_{2\cdot3\cdot6}$ K C B पारसीक–; D $RSs_2$ पारिसेक–.

370 $S'_4$ missing (cf. v. l. 1). —a) D B $S'_6$ marg. विजये. —b) B -सीधु–; P T -विधून् (for -वधूर्), see NOTES. —c) $S'_3$ -लोलक–.

371 $S'_4$ missing (cf. v. l. 1).

372 $S'_4$ missing (cf. v. l. 1). —a) $RSs_2$ गेविंद-.

373 $S'_4$ missing (cf. v. l. 1). —a) $S''_2$ शैले.

374 $S'_4$ missing (cf. v. l. 1). —d) $S'_{1\cdot5}$ K रत्नं···य (blank filled as in text with D B); $S'_{2\cdot3}$C आदाय (for त्राणाय); $S'_6$ आधा (marg. त्राणा) य.

375 $S'_4$ missing (cf. v. l. 1). —a) D राज्ञोस्तु. —d) D B भयभा°. $S'_1$ भारा (illeg.) नु°; D B $S'_6$ (after corr.) °भिषङ्गतः.

भङ्गस्तुङ्गस्य श्टङ्गस्य खङ्गानां नैव भूभुजा ।
शिङ्गानामपि देशेऽस्मिन् विहितः शौर्यशालिना ॥ ३७६ ॥

आकर्ण्य राजसिंहस्य सिंहनादमयीं चमूम् ।
मदं तत्याज चस्खाल बिभाय गजिनीपुरी ॥ ३७७ ॥

श्रोत्रियक्षत्रियैरष्टनगरेऽरोदि शाम्यतोः ।
तरुणाग्निप्रतापाग्न्योर्धूमेनेव भयातुरैः ॥ ३७८ ॥

यशसा सह सम्पत्तिं तस्मिंल्लुण्ठयति प्रभौ ।
प्रापत् पुरुषवीराख्यदेशाख्या रूढिशब्दताम् ॥ ३७९ ॥

दत्तवाष्पनिवापाम्भोनगराग्रहरस्त्रियः ।
जीवतः स्वस्य पत्युश्च पिण्डौ स्तननिभाद्दुः ॥ ३८० ॥

अश्वक्षोडदलद्धिन्दुघोषधातुतटच्छलात् ।
उदकपतितिरस्कारप्रशस्तिं स व्यधात्प्रभुः ॥ ३८१ ॥

---

376 S′$_4$ missing (cf. v.l. 1). —c) S′$_{1\cdot3}$ C D शिङ्गा (S′$_1$ or ङ्गा)नाम्; S′$_2$ शिङ्गानाम्; S′$_5$ शिडा (after *sec. m.* corr. ङ्गा) नाम्; K B शितानाम्; S′$_6$ शिङ्गा (after corr. ता)नाम्.

377 S′$_4$ missing (cf. v. l. 1).
—After 377 D B S′$_6$ marg. ins.:
31* (B 434) स्नातं रक्तैर्द्विषां भुक्तं प्राणवातैर्महीतले ।
व्रतस्थायिभिरिवास्वापि तस्याहो धीरहेतिभिः ।
[(l. 1) B स्नानं (mislec. for Dev. तं)].

378 S′$_4$ missing (cf. v. l. 1). —a) S′$_1$ श्रोत्रि (overwritten *pr. m.* prob. on ति,य–; D (before corr.) श्रोत्रियै–; S′$_5$ K अष्टा°. —b) K शास्य (mislec. for S′ār. म्य)तोः. —c) S′$_2$ तारुण्या°.

379 S′$_4$ missing (cf. v. l. 1).

380 S′$_4$ missing (cf. v. l. 1). —b) M (erroneously) -वर- (for -हर-). —c) S′$_2$ जीवन्तः (sic). —d) S′$_{3\cdot5}$ C पिण्डास्ते (mislec. for S′ār. ण्डौस्त) न–; S′$_6$ (orig.) -निभाद्, (marg.) -मिषाद्; S′$_2$ दधुः.

381 S′$_4$ missing (cf. v. l. 1). —a) S′$_{1\cdot5}$ K अश्व···त्सु (blank with dots); in S′$_5$ blank filled *sec. m.* as in B); S′$_{2\cdot3}$ C -पालेषु गच्छत्सु (for -क्षोडदलद्धिन्दु-); D B S′$_6$ marg. -क्षोद (mislec. for S′ār. ड) दलद्धिन्दु- as in text), see *Mīmāṁsā*, p. 445. —b) S′$_5$ K -घोषा-. —c) K उदक्ष (mislec. for S′ār. कप)ति-.

ततो व्यावृत्य गच्छन्स दक्षिणाशां स्ववाजिनाम् ।
मार्गखेदोदितं तापं शतद्रुवारिणाऽहरत् ॥ ३८२ ॥

ढिल्लीमुल्लुण्ठ्य तत्कालमुदक्पतिमुपागतम् ।
मार्गरोधेन नृपतिर्निर्तान्तमुदवेजयत् ॥ ३८३ ॥

योगिनीपुरपौरान्यान् धाट्यानैपीदुदक्पतिः ।
मार्गदानोपकारेण स तानदित भूभुजे ॥ ३८४ ॥

तुरङ्गवस्त्रदानेन स तान् सम्मान्य भूपतिः ।
स्वदेशं प्राहिणोत्कीर्तिराशीन्मूर्तान्विद्वानिव ॥ ३८५ ॥

सुशर्मपुरराजेन तस्मात् स्वाशर्मशङ्किना ।
दुर्गाहङ्कारमुत्सृज्य देव्येव शरणीकृता ॥ ३८६ ॥

स्वयं नत्या नतूनत्या भौट्टानामस्य भूपतेः ।
अर्वतां पर्वतारोहदोहदो विनिवारितः ॥ ३८७ ॥

---

382 $S'_4$ missing (cf. v. l. 1). — a) D B व्यावृत्य. — c) $S'_{1-3.5.6}$ K C D B -खेदोचि (mislec. for S'ār. दि) तं. — d) $S'_{1.5}$ K C $RSs_1$. शतद्रू-; $S'_{1-3.5.6}$ K C [अ] हन (mislec. for S'ār. र)त्.

383 $S'_4$ missing (cf. v. l. 1). — a) $S'_{3.6}$ marg. D B उल्लङ्घ्य (for उल्लुण्ठ्य. Thus *pr. m.* marg. in $S'_3$). — b) K उदक्ष (mislec. for S'ār. क्प) तिम्. — cd) D नृपतिं नि° (mislec. for S'ār. °तिर्नि>न्नि).

384 $S'_4$ missing (cf. v. l. 1). In $S'_{1-3.5.6}$ K C 384 om. hapl. — d) B (evid. emend.) आदित.

385 $S'_4$ missing (cf. v. l. 1). — b) C सामा (mislec. for S'ār. सम्मा) न्य; $S'_3$ सां (after corr. सं) मा°.

386 $S'_4$ missing (cf. v. l. 1). — a) स्व (mislec. for S'ār. सु)शर्म-; $S'_6$ marg. पुर in सुशर्मपुर-. — d) $S'_2$ देवीव. —After 386 D B $S'_6$ marg. ins.:
32* (B 444) तत्प्रतापानलः पीत्वा केदाराश्रयिणां रसम् ।
जातानां शिवलिङ्गानां वत भङ्गमदर्शयत् ।

387 $S'_4$ missing (cf. v. l. 1). — a) $S'_2$ स्वयं तत्पानतृप्तानां (marg. *pr. m.* as in text). — b) $S'_{2.6}$ (after corr.) B भोट्टा°. — c) M (orig.) अर्वतां, (marg.) अर्वाणां. — cd) $S'_2$ °रोहदो syll. hapl. for) रोहदोहदो).

दुस्तरत्वात्तटस्थस्य देवताभिस्तनूकृतः।
सिन्ध्वोघो नृपतेरेवं पूर्वेभ्यः श्रुतमद्भुतम् ॥ ३८८ ॥

एवं नित्यजयोद्योगात् स्वदेशः परदेशवत्।
परदेशस्तु तस्यासीत् स्वदेश इव भूपतेः ॥ ३८९ ॥

प्रतापेनेति सम्पाद्य दिङ्मुखे तिलकश्रियम्।
व्यधात्प्रविश्य कश्मीरान्स पौरनयनोत्सवम् ॥ ३९० ॥

तस्य वर्णयतां शौर्यं प्रसङ्गादतिमानुषम्।
अस्माकं चाटुकारित्वं ज्ञास्यते भाविभिर्जनैः ॥ ३९१ ॥

यात्रायातः कदाचित्स दूरदेशे महीपतिः।
अप्सरःसदृशीं कांचिच्छ्रुतवान्हरिणेक्षणाम् ॥ ३९२ ॥

निजानुगान् वञ्चयित्वा राजा युक्त्या कयाचन।
अथैकाकी स तं देशमविशद्भोगलालसः ॥ ३९३ ॥

नर्मणा मोहयित्वा तां द्वितीय इव मन्मथः।
मनोरथानसिञ्चत् स तदोष्ठामृतपानतः ॥ ३९४ ॥

अपश्यन्तस्तमाशङ्क्य हतं केनापि वैरिणा।
अथ कोपभ्रमावेशमुद्भटास्तद्भटा ययुः ॥ ३९५ ॥

---

388 S′$_4$ missing (cf. v. l. 1). —c) D B भूपतेर् (for नृ°).

389 S′$_4$ missing (cf. v. l. 1). —a) S′$_5$ K जयोद्वेगात्.

390 S′$_4$ missing (cf. v. l. 1). —d) S′$_{1-3.5.6}$ (before corr.) K C पौरा° (emended as in text with D B. Thus marg. *sec. m.* in S′$_5$).

391 S′$_4$ missing (cf. v. l. 1). —d) S′$_5$ ज्ञास्यन्ते (sic); S′$_{1.5}$ K -भोजनैः (emended as in text with S′$_{2.3.6}$ C D B. Thus marg. *sec. m.* in S′$_5$).

392,393 S′$_4$ missing (cf. v. l. 1).

394 S′$_4$ missing (cf. v. l. 1). —c) C असिञ्चत (sic).

395 S′$_4$ missing (cf. v. l. 1). —a) D B आलोक्य (for आशङ्क्य). —c) D B -त्रपा° (for -भ्रमा°).

अन्विष्यद्भिस्तदश्वेन निबद्धेनाङ्गनाद्बहिः ।
समभाव्यत तै राज्ञो वैरिभिर्निर्जयः कृतः ॥ ३९६ ॥

शौर्यस्वाम्यनुरागाभ्यां विधातुं युद्धमुद्भटैः ।
तद्भटैः सदनं रुद्धमबद्धकवचान्तरैः ॥ ३९७ ॥

त्रसद्भिरिह तत्सिंहनादपूर्णात्ततः पुरात् ।
कृतास्कन्देषु शूरेषु शत्रुभिर् विपिनं गतम् ॥ ३९८ ॥

अथाश्वास्य प्रियां तां तु शत्रून्मत्वा समागतान् ।
स्वशौर्यं सफलीकर्तुं योद्धुं राजा विनिर्ययौ ॥ ३९९ ॥

शाहावदेनमालोक्य तं तेषामनुजीविनाम् ।
चित्तैः प्रीत्या मुखैर्भीत्या नीत्या मूर्धभिरानतम् ॥ ४०० ॥

एवं स सजयस्तम्भयूपात्रणमखान्बहून् ।
हतवैरिपशूंश्चक्रे स्वप्रतापानलार्चिषः ॥ ४०१ ॥

स्वदेशे मन्त्रिणोस्तस्य कोटभट्टोदयश्रियोः ।
समरेषु भरस्त्वासीच्चन्द्रडामरलौलयोः ॥ ४०२ ॥

---

396 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{2\cdot3\cdot5}$ K D B तम् (for तद°).
—[c]) $S'_5$ (before corr.) K समभावि (sic) त.
397 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{2\cdot3\cdot5\cdot6}$ K C °नु नुरागाभ्यां तु
(hypermetric). —[d]) $S'_3$ आबद्ध–.
398 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{1-3\cdot5\cdot6}$ K C अत्रसद्भिश्च
(emended as in text with D B); $S'_{2\cdot3\cdot5}$ (*sec. m.* marg.)
₆ C पुरा (for पुरात् ). —$S'_{1-5\cdot5\cdot6}$ K C om. 398[cd],399 and
400[ab].
399 $S'_4$ missing (cf. v. l. 1).
400 $S'_4$ missing (cf. v. l. 1).
401 $S'_4$ missing (cf. v. l. 1). —[a]) B (evid. emend.) शाहावदीनम्.
( marg. *sec. m.* ) C गुण– ( for रण– ); $S'_{1-3\,5\cdot6}$ K C -मुखान्
( emended as in text with D B ). —[d]) $S'_{1\cdot5\cdot6}$ K स (C $S'_5$
[ after corr. ] ₆सु) प्र° ( emended as in text with
$S'_{2\cdot3}$ D B).
(cf. v. l. 1). —[a]) $S'_{2\cdot3}$ C स्वजय–. —[b]) $S'_{3\cdot5}$
402 $S'_4$ missing (cf. v. l. 1). —[b]) D B $S'_6$ (after corr.) कोट्ट–.
—[c]) $S'_2$ भय– (for भर–).

देवशर्मान्वयोद्न्वच्चन्द्रो राज्ञार्पितं मुहुः ।
वैराग्याद्विभवं त्यक्त्वा कोटशर्मा वनं ययौ ॥ ४०३ ॥

तस्य दर्शयितुं राज्ञः स्वबलाधिकतां ध्रुवम् ।
कदाचित्तत्प्रजा दैवी व्यापद्गाढमपीडयत् ॥ ४०४ ॥

पुरीकैरविणीसूरः शूरः पादपविद्विषाम् ।
षट्त्रिंशेऽब्दे जलापूरः क्रूरो व्यप्लवत प्रजाः ॥ ४०५ ॥

नगरग्रुडनादस्तु मुञ्चन्तो निर्झरच्छलात् ।
तस्योदीपस्य महतः पर्वतास्तटतामगुः ॥ ४०६ ॥

न स वृक्षो न सा सीमा न स सेतुर्न तद् गृहम् ।
तटस्थमपि यन्नैव जलपूरो व्यनाशयत् ॥ ४०७ ॥

---

403 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_5$ K °नुश्च (mislec. for S'ār. न्व [thus after *sec. m.* corr. in $S'_5$]च)न्द्रो b) $S'_2$ राजार्पि°. —[c]) C वैरागाद्. —[d]) D B $S'_6$ (after corr.) कोट्ट-.
—After 403 D B $S'_6$ marg. ins. :

33* (B 462) श्रीवृष्टया कोट्टभट्टोऽर्थिसार्थान्सम्पोष्य यत्नतः ।
व्यलालयद्वनव्योम्नि स स्वं नियममारुतैः ।
(B 463) कोटशर्मा तथा धर्मद्रुमं दानाम्भसासिचत् ।
ननाशाशामयो भूयो यथा तत्फलभोगिनः ।

[(l. 2) M ( evid. emend. ) व्यलापयद्. —(l. 3) B कोट्ट-. —(l. 4) B न-नाशाम°; M (marg.) न ननाश महो sic].

404 $S'_4$ missing (cf. v. l. 1). —[c]) $S'_5$ देवी. —[d]) M (evid. emend.) ह्यापद् (for व्यापद्°).

405 $S'_4$ missing (cf. v. l. 1). —[a]) $S'_{2\cdot5}$ K D शूरः (for सूरः);
—After 405 D B $S'_6$ marg. ins. :

34* (B 466) तदन्तःप्रतिबिम्बस्थे स्वस्मिन् सभ्रान्तरभ्रमात् ।
तद्वीक्षार्थमिवानीके तोये तुम्बीर्व्यधुर्गृहाः ।

[(l. 2) D °र्म्वीं व्य°].

406 $S'_4$ missing (cf. v. l. 1). —[a]) D -ग्रोड°. —[c]) $S'_{2\cdot3}$ C [उ]द्वीप°; B (evid. emend.) $S'_6$ [उ] द्द्वी ($S'_6$ before corr. द्वी )प°.

407 $S'_4$ missing (cf. v. l. 1). —[b]) $S'_3$ सी (Kaś. speech-habit for से)तुर्; D न सेतुर्न च (for न स सेतुर्न).

नाद्रिदुर्गाण्यपश्यत् स जातुचिद्वैरिभीतितः ।
अम्बुपूरभयात्तेषु राजा समचरत्तराम् ॥ ४०८ ॥

पीते तत्तेजसेवाम्बुपूरे शान्ते मितैर्दिनैः ।
भूयस्तद्विप्लवाशङ्की सोऽचिकीर्षद्गिरौ पुरीम् ॥ ४०९ ॥

नाम्ना लक्ष्म्या महिष्याः स प्रसिद्धां नगरीं व्यधात् ।
शारिकाशैलराजस्य मूले पुण्यजनाश्रिताम् ।
यामद्राक्षीत्तरां लोकः सुमेरोरलकामिव ॥ ४१० ॥

स्वौदार्यानुगुणं राजा निर्माणमविलोकयन् ।
वितस्तासिन्धुसम्भेदे स्वनाम्ना स पुरीं व्यधात् ।
प्रतिबिम्बच्छलात्तोये त्रपया स्वर्निमज्जति ॥ ४११ ॥

सौधोत्सेधमयीं राशीभूतां कीर्तिमिवामलाम् ।
अलोलश्रीः पुरीं लौलडामरः स्वाभिधां व्यधात् ॥ ४१२ ॥

---

408 $S'_4$ missing (cf. v. l. 1).

409 $S'_4$ missing (cf. v. l. 1). —c) $S'_{1\cdot5}$ K भूप(mislec. for S'ār. य)स्. —d) K चिकीर्षुर्.

410 $S'_4$ missing (cf. v. l. 1). —a) $S'_{1\cdot2\cdot5\cdot6}$ K C B (gram. assim.) महिष्या; $S'_3$ मद्वि (*sup. lin. pr. m.* हि) ष्याश्; $S'_{2\cdot3\cdot6}$ (before corr.) C च (for स). —c) $S'_{1-3\cdot5\cdot6}$ K C B शारिकां (emended as in text with D).

411 $S'_{1-3\cdot5\cdot6}$ K C, D B (var.) read 411[ab] after 410[ab]. —ab) D B $S'_6$ (marg.) त्वाराकृतनिजौदार्यन्यूननिर्माणदर्शनात्. —a) $S'_{1\cdot2\cdot5}$ K °गुणां. —d) D B नगरीं (for स पुरीं). —f) Ms $S'_4$ begins with त्रपया; $S'_{2-4\cdot6}$ C D स्व ($S'_{2\cdot3\cdot6}$ ⌊before corr.⌋ C स्वि)न्नि (mislec. for S'ār. नि)म°; $S'_5$ (orig. as in text; after corr. स्विन्नि°).

412 b) $S'_{1\cdot4\cdot6}$ C [अ] च (mislec. for S'ār. म. Thus *sup. lin.* in $S'_6$) लाम्. —c) $S'_{2\cdot3}$ C $RSs_{1\cdot2}$ लोल-.
—After 412 D B $S'_6$ marg. ins. :

35* (B 475) सुधाधौतैर्मठैर्लक्ष्मीं फलयाद्भिः कृतैः पुरी ।
कुलिशच्छिन्नकैलासश्रृङ्गभङ्गिमजीजनत् ।

[(l. 1) B (erroneously) पुरीम्. —(l. 2) M (evid. emend.) -भङ्गीम्].

आ जन्मनो लता मह्याऽम्बरसाम्याय वर्धिता।
निहन्ति च्छायया तस्या द्युमणिस्पर्शजं सुखम् ॥ ४१३ ॥

या लक्ष्म्या भागिनेयीत्वाद्वालापालि निजान्तिके।
लासाख्या सा समक्रामन्नृपतेश्चित्तदर्पणे ॥ ४१४ ॥

यश्चानुरोधतन्तुस्तं चिरं लक्ष्म्यां निबद्धवान्।
स छिन्नो रागवेगेन लासासौन्दर्यजन्मना ॥ ४१५ ॥

बलिजिन्मूर्तिना तेन वसन्त्या वक्षसि श्रियः।
प्रातिवेश्मिकतां नीता लासा सौभाग्यभागिनी ॥ ४१६ ॥

छाया तद्रचितोदयापि दिवसश्रीभोगमातन्वतः
सूर्यात्सम्मुखतां जहाति वहति श्रेयोहरीं कालताम्।
स्त्रीणामस्ति चतुर्गुणा मतिरिति स्थाने न हन्त श्रुति-
र्यद्वा दुर्विधिपाकमाकलयितुं शक्तो न कश्चिद् ध्रुवम् ॥ ४१७ ॥

प्राकृतस्यावताराख्यभोल्लस्यापि सुता सती।
लक्ष्मीर्लासानुरक्तेऽधादथ रोषं महीपतौ ॥ ४१८ ॥

---

413 a) $S'_{1-6}$ K C D B आजन्मलोल ($S'_3$ भ or व)ता (emended as in text); C $S'_6$ B (gram. assim.) मह्याः. —b) $S'_{1-6}$ C D B °स्व (mislec. for S'ār. म्ब)र-; D -साप्याय. —d) $S'_3$ सुखे (mislec. for S'ār. खं).

414 a) $S'_2$ D °नीयत्वाद्. —c) $S'_{2\cdot3\cdot5}$ K C समाक्रा°.

415 b) $S'_{2-5}$ K C लक्ष्म्या.

416 a) $S'_2$ °न्मूर्तिता (by syll. contam. for °ना). —b) $S'_{2\cdot3}$ (before corr.) C श्रिया (gram. assim.); D श्रियाः. —c) $S'_{1-5}$ K C प्रतिवेश्मकितां (emended as in text with D B); $S'_6$ (conflated) प्रातिवेश्मकितां. —d) D B $S'_6$ marg. -दायिनी (for -भागिनी).

417 c) M (evid. emend.) हन्ति (for हन्त). —d) $S'_1$ (orig.) -पाकम् (after corr. -पक्कम्); $S'_{2-6}$ K C पक्क ($S'_6$ *sup. lin.* पाक)म्; $S'_{2\cdot3}$ द्रुतम् (for ध्रुवम्).

418 ab) $S'_{1\cdot4}$ K °ख्यो भ° (prob. by shifting of S'ār. matra-sign for °ख्यभो°); $S'_{2\cdot3\cdot5}$ (after corr.) $_6$D B C °ख्याभ (D ब, B व)ल्ल°,

रोषात् सिन्धुपतेर्देशं सम्बन्धित्वाद्गतां नृपः।
प्रत्यानयत् त्रपोद्रेकान्न पुनः स्नेहगौरवात् ॥ ४१९

अपनीय तापखेदं मरुकरिणी पद्मिनीतोयैः।
तत्पद्मशैवलाम्भोनिर्माथे कर्मठी भवति ॥ ४२० ॥

लक्ष्म्या मातृस्वसुः सर्वमातृकृत्यकृतोऽभवत्।
राजप्रियाथ राकेव लासा पक्षक्षयोद्यता ॥ ४२१ ॥

सत्कर्मपाकसमयोऽस्य न चेद्विकास-
शोभां न किं परिहरेत् कुमुदाकरस्य।
विश्वप्रबोधहरणप्रवणा क्षणेन
कुश्री निशा च सहसैव निशाकरेण ॥ ४२२ ॥

चिन्तासूचकनिश्वासम्लानौष्ठी तं कदाचन।
अवोचद् भोगिनीवेति लासाख्या भोगिनी नृपम् ॥ ४२३ ॥

---

419 [a]) $S'_{1\cdot2\cdot4\cdot5}$ C anusvāra om. in देशं. —[b]) $S'_{4\cdot5}$ (before corr.) समन्धि°; $S'_2$ च तां (for गतां). —[c]) $S'_2$ D तपो°; $S'_3$ नयो° (for त्रपो°).

—After 419 D B $S'_6$ marg. ins. :

36* (B 483) अलाब्वो न्यम्बुडन्नन्तरप्लवन्त जले शिलाः।
लक्ष्मीपक्षः क्षयं वृद्धिं लासापक्षस्तु लब्धवान्।
(B 484) यावद्यावदगाद् दूरं लक्ष्मी रात्रिरिव क्रुधा।
तावत्तावत् स तां लासां दिवं भास्वानिवाभजत्।

[(l. 1) D अलावो (emended as above with B). —(l. 4) D तंसा (by syll. contam. and shifting of anusvāra for लासां)].

420 [c]) $S'_6$ C B -शंवला°. —[d]) $S'_3$ कर्मटी°.

421 [a]) $S'_3$ मातृष्वसुः.

422 [a]) C B विकाश-. —[c]) $S'_{1-6}$ KC -प्रवण- (emended as in text with DB); D B प्रियेण (for क्षणेन); —[d]) D B $S'_6$ marg. सुधा° (for निशा°).

423 [a]) $S'_3$ -निः श्वास- ( visarga ins. later ). —[b]) $S'_2$ -क्लिन्नौष्ठी (for म्लानौष्ठी); $S'_{3,5}$ (after corr.) C म्लानौष्ठाभं (mislec. for S ār. तं).

न चेद्विकासयेद्भास्वान् पद्मिनीं स्वरुचा स्फुटम् ।
तस्याश्छेदाय शेवालवल्ल्या इव यतेत कः ॥ ४२४ ॥

पतन्तीं प्रेमभारार्द्रां मयि दृष्टिं तवासहा ।
मां निहन्तुमुपायेन क्रमते महिषी तव ॥ ४२५ ॥

अभिचारे दुराचारमुपचारप्रियङ्करम् ।
सा चाराक्षी मयि द्वेषादुदयश्रियमैरयत् ॥ ४२६ ॥

देवद्वेषपरे तस्मिन्नभिचारविनिर्मितिः ।
असम्भाव्येति तां राजा प्रत्युवाच विचक्षणः ॥ ४२७ ॥

निर्बन्धेनोपजल्पन्तीं तदेव वचनं ततः ।
तां प्रत्याययितुं देवीमुदयश्रियमब्रवीत् ॥ ४२८ ॥

व्ययस्यातिशयेनाहो कोशो रिक्तत्वमागतः ।
प्रार्थयन्ते जना राज्ञः सर्वे कल्पतरूनिव ॥ ४२९ ॥

द्रविणोत्पत्तये तस्मादुपायः प्रतिभात्ययम् ।
प्रतिमा श्रीजयेश्वर्या यास्ति रीतिमयी पृथुः ॥ ४३० ॥

---

424 a) C B विकाश°. —c) S′6 C B शैवाल-.

425 d) $S'_{1\cdot2\cdot4\cdot5}$ K C कुरु (mislec. for S′ār. क्रम) ते. S′6 (orig.) कुरुते (marg. क्रमते).

426 a) S′3 अभिचारं (mislec. for S′ār. रे). —b) S′3 (evid. emend.) गुप्त- (for उप-). —c) D B मम (for मयि).

427 S′2 (evid. emend.) देवादेश-; S′3 (after corr.) देविदेश- (for देवद्वेष-); D B S′6 (after corr.) देव्यद्वेष-. —c) $S'_{1\cdot4\cdot5}$ (before corr.) K तं (emended as in text with $S'_{2\cdot3\cdot6}$ C D B).

429 a) $S'_{2\cdot3\cdot6}$ (before corr.) C व्ययित्वा°; D वयस्या°. —d) $S'_{1\cdot4\cdot5}$ (before corr.) K D B सर्वे (mislec. for S′ār. र्वे).

430 d) $S'_{4\cdot5}$ (before corr.) K B याति (mislec. for S′ār. स्ति); S′6 यास्ति (marg. ति).

तां खण्डयित्वा विहृतैष्टङ्कैर्मन्नामचिह्नितैः ।
व्ययनिर्वहणं कीर्तिस्थिरत्वं चोपजायते ॥ ४३१ ॥

साध्वेतत्किन्तु तन्मूर्तिर्लघ्वी किं प्रभविष्यति ।
बृहद्बुद्धेन मुद्रास्तु क्षुद्रस्तं सचिवोऽभ्यधात् ॥ ४३२ ॥

तत्रोपकरणं सज्जीकृत्यान्येद्युरुपागतम् ।
राज्ञीं प्रत्याय्य भूपालो रहो मन्त्रिणमब्रवीत् ॥ ४३३ ॥

याः पूर्वैर्निरमीयन्त यशःसुकृतलब्धये ।
अङ्गीकर्तासि ता देवप्रतिमा भङ्क्तुमञ्जसा ॥ ४३४ ॥

अमरप्रतिमा विधाय केचित्
परिपूज्याथ परे प्रसिद्धिमाप्ताः ।
परिपाल्य यथोचितं तथाऽन्ये
विदलय्याहमहो महद्दुरन्तम् ॥ ४३५ ॥

---

431 a) $S'_1$ (before corr.) $_{2-6}$ K C D B विहितैः. —c) $S'_2$ -निर्वाहणं. —d) $S'_2$ सो (mislec. for S'ār. चो)प°.

432 b) $S'_3$ लब्धो (sic) (for लघ्वी). —d) $S'_{4\cdot5}$ (before *sec. m.* corr.) K तां (for तं).

433 a) $S'_{1-5\cdot6}$ ( before corr. ) K C भद्रो° ( for तत्रो° ) —c) $S'_{1\cdot3-5\cdot6}$ (before corr.) K C प्रत्यय्य (emended as in text with $S'_2$ D B).

—After 433 D B $S'_6$ marg. ins. :

37* (B 499) पुंनागव्रजमुन्मुमूलयिषति प्रायः कराकर्षणै-
रुद्दामं विजिहीर्षति प्रतिपदं कक्ष्याछिदां काङ्क्षति ।
कां नैच्छन्नृपगन्धसिन्धुरपतिस्तीव्रां न वप्रक्रियां
तीक्ष्णाग्रप्रतिभयाङ्कुशोऽस्य निकटे मन्त्री नियन्ता पुनः ।

434 c) D B म (for ता). —d) D ता विभंक्षतः; B $S'_6$ (marg.) °स्ता विभङ्क्षत (for भङ्क्तुमञ्जसा); $S'_3$ भङ्क्त (marg. *pr. m.* ङ्क्तु)म्.

435 b) D प्रति- (for परि-); $S'_6$ *pr. m.* marg. सिद्धि in प्रसिद्धिम्. —c) $S'_5$ (before corr.) K [अ]न्यैर् (for °न्ये). —d) $S'_1$ *pr. m.* *sup. lin.* द in °विदल°; $S'_3$ °य्येहम् (for °य्याहम्).

निर्माणाज्जलधेः समस्तसरितां कौमारशोकावधिः
प्रख्यातः सगरो भगीरथनृपो गङ्गावताराच्च सः ।
दुष्यन्तः स च विश्वविश्वविजयाज्जिष्णोर्भयान्यावहन्
रामो हन्त दशाननेन विहितात् सीतापहारात् पुनः ॥ ४३६ ॥

राजा शाहाभदीनाख्यः सुरमूर्तीरलोठयत् ।
मा दुर्वार्तैयमत्युग्रा चकम्पद्भाविनो जनान् ॥ ४३७ ॥

उदयश्रीर्नतशिरा राज्ञीत्युक्तवति स्वयम् ।
महीरन्ध्रमिवैक्षिष्ट द्रागधोगतिवाञ्छया ॥ ४३८ ॥

भास्करो द्युपरीरम्भरसासादितकौतुकः ।
स्वपुत्रशनिमुख्यानां ग्रहाणां हानिमिच्छति ॥ ४३९ ॥

---

436 a) $S'_3$ C M °वधि; $S'_6$ visarga inserted later in °वधि:; $S'_{2.3.6}$ C कृतेश्च ( for समस्त. Thus marg. in $S'_6$ ). —b) $S'_3$ प्रस्थात: सगरे. —c) $S'_{1.5}$ दुष्ष्यन्त:; $S'_3$ दुष्षन्त:; C दुष्मन्त:; D दुःष्यंत:; D B $S'_6$ marg. इन्द्रस्य भीतिप्रदो ( for जिष्णोर्भयान्यावहन् ). —d) K °हारात्म (mislec. for S'ār. त्पु)नः.

437 a) $S'_1$ शाहभ°; $S'_{4.5}$ K C D B शाहाव- ($S'_5$ °ब-). —cd) D B $S'_6$ marg. इतीयं दुष्कथा विश्वं कथं न क्षोभयिष्यति. —c) $S'_{1-6}$ K C सा (mislec. for S'ār. मा); $S'_2$ साधुर् (for मा दुर्°); $S'_{1.4-6}$ K C °र्ता यम् (emended as in text with $S'_{2.3}$). —d) $S'_1$ चकम्प्या (illeg.) द्; $S'_5$ K चकम्पाद् $S'_{2.3}$ च ($S'_2$ श) कास्यद्; $S'_{4.5}$ (before corr.) भाविनी; $S'_3$ जनात् (sic).

438 c) K बन्धु (mislec. for S'ār. रन्ध्र)म्; D [ए]क्षष्ट.

—After 438 D B $S'_6$ marg. ins. :

38* (B 505) सर्वसहा तदा क्ष्माभूदन्वर्था प्राग्वदेव यत् ।
लासानुरक्तमपि तं सा राजानमसेवत ।

439 c) $S'_{2.3}$ सपुत्र-. —d) B (evid. emend.) $S'_6$ marg. शान्तिम् (for हानिम्).

रागी तद्दोषवादिन्या लासादेव्या प्रबोधितः ।
व्यवासयत्स्वदेशात्स राजपुत्रान् परानिव ॥ ४४० ॥

कार्येष्वतिमनुष्येषु साहायकविधायिभिः ।
योगिनीपुरनाथस्य तैर्व्यक्तो विक्रमः कृतः ॥ ४४१ ॥

औदार्यदत्तवृत्तीन्स हिन्दुखानेन बोधितः ।
म्लेच्छान् सेकन्धरमुखान् राजद्रोहकृतोऽवधीत् ॥ ४४२ ॥

पिशुनैर्जनिताशङ्कः शूरे मदनलाविके ।
राजा विप्लवसज्ञोऽपि सेवयाऽस्य निवारितः ॥ ४४३ ॥

---

440 a) $S'_4$ -वादि (*sup. lin. pr. m.* ग्दि)व्या (sic); $S'_5$ (before corr.) K -वाग्दिन्या. —b) $S'_{1\ 6}$ K C तया (emended to लासा as in text with D B); D विबोधितः. —d) D राजा.

441 b) $S'_{2\cdot5}$ (before corr.) सा($S'_5$ स) हाय्यक–. —c) K भोगिनी– —d) D B $S'_6$ marg. तैरभूषि निजं कुलम्.

442 b) $S'_{1-6}$ K C हिन्दुकानेव (emended as in text with D B), cf. 462 —c) $S'_{1\cdot4\cdot5}$ K सेगन्धर–; $S'_{2\cdot3\cdot6}$ सेकन्धर– (as in text); C शे (Bengāli speech-habit) कन्धर–; D B से (B सि) कन्दर–. —d) $S'_3$ राजा.

443 b) $S'_{1-6}$ K C शूरो (emended as in text with D B. Thus marg. in $S'_6$); $S'_{1-6}$ K C -लाविकः (emended as in text with D B. Thus marg. in $S'_6$). —d) $S'_{1-6}$ K C सेनया; D B सेवया (as in text). —After 443 D B $S'_6$ marg. ins. :

39* (B 511) औदार्यशालिना राज्ञा स्वसमं वर्धितः स्वयम् ।
राजाऽधिकं व्यवाहार्षीत्तदा मदनलाविकः ।
(B 512) तुल्यार्थः समसामर्थ्यः शङ्क्योऽयमिति भूपतिः ।
ईर्ष्यालुभिः कुसचिवैस्तस्मै परमकोप्यत ।
(B 513) शुचिमप्यशुचिं मत्वा तं वीतिं भूमिपालधीः । [5]
खलनाशावृतत्वेन न चित्तविरताभवत् ।
(B 514) उपप्लावयितुं वाञ्छंस्तं मुहुः क्रोधवेगतः ।
राजरत्नाकरोऽरोधि तदीयगुणवेलया ।

[(l.5) B तं-तिं; $S'_6$ तं मत्तिं; M (evid. emend.) तन्मतिं (for तं वीतिं). —(l.6) M (evid. emend.) -पाशा° (for -नाशा°). —(l. 7) D B उपप्लव° emended as above)].

राजा जातूत्तरां यात्रां व्यसनेनाभिषेणयन् ।
नौसेतुकौतुकं सिन्धोः परिखाया इवाऽऽहरत् ॥ ४४४ ॥

शूरः खङ्गनगर्यां स पर्यटन् मृगयारसात् ।
सिंहमभ्यद्रवद्राजा सिंहसंहृतसाहसः ॥ ४४५ ॥

गच्छंश्चित्ताधिकं राजा वाजिना वेगराजिना ।
अन्वगाम्यतिभक्तेन मदनेनैव केवलम् ॥ ४४६ ॥

एकाकिनं चिरं बद्धयुद्धमुद्धतकेसरः ।
तमधः कृतवान् राजसिंहं सिंहोऽतिसाहसम् ॥ ४४७ ॥

उत्प्लुत्य वाजिनस्तूर्णं शूरो मदनलाविकः ।
निपातितनृपं सिंहं कृपाण्या सहसाऽवधीत् ॥ ४४८ ॥

प्राणरक्षोपकारेण प्रसन्नः पिशुनाज्जनात् ।
युक्त्या मारणमेतस्य शङ्कमानो नरेश्वरः ॥ ४४९ ॥

---

444 [a]) $S'_{2\cdot3\cdot6}$ C जातत्वरां. (for जातूत्तरां. Thus marg. in $S'_6$); D B उत्तराशां नृपो जातु. —[b]) C B $S'_6$ [अ]भ्यषेणयत् ; $S'_{2\cdot3}$ K °षेणयत —[c]) $S^{\wedge}_2$ कौतुक–; $S'_{2\cdot3}$ बिन्दो: (sic) (for सिन्धो:).

445 [a]) D खङ्ग–. —[c]) D B $S'_6$ marg. अन्वद्रवद्. —[cd]) D B $S'_6$ marg. °जसिंह: (for °जा सिंह°); $S'_5$ K words beginning with °जा सिंह° in 445[cd] and ending with °धिकं रा in 446[a] om. hapl.; in $S'_5$ om. words marg. *sec. m.*

446 [a]) $S'_2$ चित्त्रा°; C °श्छि (sic)द्रा° (mislec for S'ār. त्ता). —[c]) $S'_{2\cdot3\cdot6}$ C अन्व (C न्ब)गाद° ( for °न्वगाम्य°); $S'_5$ (after corr.) अन्वगाम°. —[cd]) D B $S'_6$ marg. M अपारशौर्यभक्तिभ्यां मदनेनानु-धावितुम् (M evid. emend. °त:).
—After 446 D B $S'_6$ marg. ins. :
40* (B 518) आरूढः पौरुषं राजा सोऽवरूढस्तुरङ्गमात् ।
यमेनेव व्यधाद्युद्धं हरिणा क्रौर्यधारिणा ।

447 [b]) C -केश (Bengāli speech-habit) रः. —[c]) $S'_{1\cdot4\cdot5}$ K राजा (emended as in text with $S'_{2\cdot3\cdot6}$ C D B).

448 [b]) D B भक्तो (for शूरो).

449 [c]) $S'_5$ (before corr.) K मरणम् .

स्वविवाहच्छलाद्दत्त्वा द्रविणं करुणामयः ।
मदनं व्यसृजड् डिल्लीपतेर्निकटमञ्जसा ॥ ४५० ॥

उत्पन्नचणपकं दीप्त्या कुर्वतीं व्योम जातुचित् ।
स्वप्ने शर्करसूहाख्यो दृष्टवान्काञ्चनीं पुरीम् ॥ ४५१ ॥

वेश्म वेश्म विशंस्तत्र शून्यं पश्यन्नयं ततः ।
राजधान्यां स्त्रियं काञ्चिदपश्यत्कान्तिदन्तुराम् ॥ ४५२ ॥

अपृच्छच्च त्वमेकैव हन्तेयति महापुरे ।
व्योम्नीव शशिलेखा किं चित्रं तिष्ठसि निर्भया ॥ ४५३ ॥

कस्येयं नगरी कस्माच्छून्या सर्वत्र वर्तते ।
अत्रेदं पतितं कस्य वर्तते च कलेवरम् ॥ ४५४ ॥

सा तं जगाद गन्धर्वराजस्यासौ महापुरी ।
सुन्दरी पतिहीनेव विधुहीनेव शर्वरी ॥ ४५५ ॥

स चामात्यैः समं सर्वैः पातुं कश्मीरमेदिनीम् ।
अवतीर्णः परिस्थाप्य निजमत्र कलेवरम् ॥ ४५६ ॥

शाहाबदीन इति यः प्रथितोऽस्ति जगत्त्रये ।
तत्कलेवररक्षार्थमत्र तिष्ठामि केवला ॥ ४५७ ॥

स च निष्पादिताशेषकार्यो मासत्रयान्तरे ।
स्वामिमां नगरीमेव ध्रुवं रक्षितुमेष्यति ॥ ४५८ ॥

---

450 a) $S_{2\cdot3\cdot6}$ C B स (for स्व°).

451 a) $S'_2$ चटकन्दी° (sic) (for -चणपकं दी°); C B -चम्पकं; D B $S'_6$ marg. व्योम (for दीप्त्या). —b) D B $S'_6$ marg. कुर्वतीं जातुचित्त्विषा. —c) $S'_{4\cdot5}$ (before corr.) K स्वप्नो (sic); B (evid. emend.) शंकर-. —c) $S'_3$ दिली-; C डिल्ली-.

452 d) M (evid. emend.) -सुन्दराम् (for -दन्तु°).

455 b) $S'_{4\cdot5}$ K [अ] स्य (for °सौ). —cd) $S'_{1\cdot4\cdot5}$ K om. 455cd hapl. (supplied later marg. *sec. m.* in $S'_5$).

456 c) $S'_2$ परं (for परि°).

457 a) $S'_2$ शाहाभ°.

प्रबुद्धोऽभ्यधिकाश्चर्यशोकचिन्तारसान्तरे ।
मज्जन्नवर्णयद्राज्ञे स्वप्नवृत्तिमखण्डिताम् ॥ ४५९ ॥

असत्ये किं भयं स्वप्ने सत्ये त्वैश्वर्यमेव मे ।
इत्यन्तर्विमृषन्राजा न तथा पस्पृशे शुचा ॥ ४६० ॥

मदन्तिकमुपागम्यमिति भूमिपतिस्ततः ।
दूरस्थितानां पुत्राणां सद्यो लेखान् विसृष्टवान् ॥ ४६१ ॥

---

459 d) $S'_5$ (before corr.) K अखण्डितम् .

460 c) $S'_2$ इत्थं तद् (for इत्यन्तर्); $S_{2\cdot3}$ विमृशन् .

—For 452—460 D B $S'_6$ (on separate folio) subst. :

41* (B 524) निश्छद्मकौतुकाक्रान्तः सद्म सद्म विशन्नयम् ।
शून्यं पश्यन्नहो शोकविस्मयाभ्यामपूर्यत ।

(B 525) रहःस्थां राहुभीत्येव मूर्तिमिन्दोरनिन्दिताम् ।
कांचिदेकाकिनीं दृष्ट्वा राजधान्यां स पृष्टवान् ।

(B 526) प्रत्यक्षा पुरदेवीव का त्वं कस्य च पूरियम् । [5]
तेजःसारमिवैकत्र कस्य चेदं कलेवरम् ।

(B 527) सा जगादेति कश्मीरांस्तत्रत्यैः सह भुञ्जतः ।
राज्ञः शाहाबदीनस्य मूर्तिं रक्षाम्यमूमहम् ।

(B 528) प्रयोक्ष्यमाणो विधिना पातुमेतां निजां पुरीम् ।
अब्दां शतेन कश्मीरभोगात्स च निवर्त्स्यति । [10]

(B 529) प्रत्यवेक्षाप्रयत्नस्य स्वामिनस्तस्य दर्शनात् ।
अचिरेणैव भोक्ष्येऽहं ध्रुवमस्य फलश्रियम् ।

(B 530) इति श्रुत्वा प्रबुद्धः स विस्मयाविष्टमानसः ।
यथावद् वृत्तमाचख्यौ शाहाब्दाय महीभुजे ।

(B 531) माहात्म्याद्भाविभोगेषु निश्चयाद्वा महीपतिः । [15]
धनं संत्यक्तवान्सर्वं न तु धैर्यं मनागपि ।

[(l. 3) D B रहस्थां (emended as above). —(l. 10) B निवृत्स्यति. —(l. 12) D [इ]व (emended to [ए]व as above with B). —(l. 14) B आचक्षौ].

ततो मुमूर्षुर्भूपालो हिन्दुखानं निजे पदे।
अप्राप्ततनयो धीमानभ्यषिञ्चत्स्वयं ततः ॥४६२॥
ज्येष्ठशुक्लचतुर्दश्यां तानाङ्केऽब्दे महीपतिः।
आलिङ्ग्य नाकवनितास्तनौन्नत्यमपीफलत् ॥४६३॥

---

462 b) $S'_{1\text{-}6}$ K C हिन्दुकानां (emended as in text), cf. 442.
—For 462 D B $S'_6$ (on separate folio) subst.:
42* (B 533) पूर्वराजगुणादर्शो मुमूर्षुर्भूपतिस्ततः ।
अप्राप्तेषु स्वपुत्रेषु स्वानुजं राज्यमार्पिपत् ।
[(l. 2) D B सु (mislec. for S'ār. स्व) पु°; D आपिपत् (emended as above with B)].
—After 42* D B $S'_6$ (on separate folio) ins.:
43* (B 534) तं भक्तं नेश्वरोऽनैषीत्सदेहं यत् सधर्मताम् ।
तत्र हेतुर्ध्रुवं तस्मिन्सौभाग्यान्मदनभ्रमः ।
(B 535) शौर्यौदार्यविधौ विधौतविविधश्लोके नृलोकेश्वरे ।
तस्मिन्नस्तमुपागते गुणिगणत्राणोच्चरन्नैपुणे ।
शक्रेणोन्नमितं शिरः परिभवत्रासापसाराद् ध्रुवं ।
भूभारोद्वहनात्पुनर्विनमितं शेषेण शोकस्पृशा ।　[5]
(B 536) प्रत्यक्षं ज्वलतः प्रतापशिखिनः स्वीकृत्य यां भुक्त्वा-
न्न्यानाद्रियताधिकं स्पृहयतस्तद्रागबन्धाच्च या ।
तां भूमिं प्रविहाय हायमगमद् यां शक्रभुक्तां चिरं
पुंसां स्त्रीषु कदापि न प्रभवति प्रेमग्रहप्रत्ययः ।　[10]
[(l. 3) D B शौर्यो° (emended as above); M (evid. emend.) -निधौ (for -विधौ). —(l. 7) B यं (for यां). —(l. 8) D °न्न्याना° (emended as above); B (evid. emend.) °नन्यान्ना° (for °न्नान्याना°). —(l. 9) D तं (emended as above with B).
—In $S'_6$ 41*, 42* and 43* on separate folio ending with the remark: १८ पृष्टे पतितमेतज्जोनराजतरङ्गिण्याम् ].
463 a) $S'_{2\cdot3\cdot5}$ (after corr.) $_6$ ज्यैष्ठ–. —b) D B $S'_6$ marg. वत्सरे नृपः (for °ब्दे महीपतिः). —c) D B $S'_6$ marg. आलिङ्गनैः सुरस्त्रीणां; $S'_2$ -वनिताः. —d) $S'_2$ after अपीफलत् (figure) 18 (to denote S'āhābadīn 18th ruler).
—After 463 D B $S'_6$ marg. ins.:
44* (B 538) मत्वेव भूजयाद् भूयः पुनरुक्तापवादताम् ।
शाहाभदीने निर्जेतुं द्यामिव प्रस्थिते सति ।
[(l. 2) B $S'_6$ शाहाव($S'_6$ °ब–)].

कुद्देननरेन्द्रोऽथ मौलावाशां महीभुजाम्।
चित्ते सुखं मुखे हर्षं स्तुतिं वाचि न्यधात्ततः ॥ ४६४ ॥

नातितीव्रो न वा मन्दः सर्वस्यैव महीपतिः।
चित्तमादित लोकस्य वैषुवो भानुमानिव ॥ ४६५ ॥

लोहरप्रत्यवेक्षार्थं यान्न्यधात्पूर्वभूपतिः।
लोहराधिपतेर्भीत्या ते पलाय्य गतास्ततः ॥ ४६६ ॥

---

464 a) $S'_{2-6}$ K C D B कुम्र ($S'_{2\cdot6}$ C म्भ, $S'_3$ ङ्ग) (mislec. for S'ār. द); B (evid. emend.) $S'_6$ marg. कुद्बु°; $S'_{2\cdot3\cdot5\cdot6}$ K C B °दीन–.
—After 464 D ins. :

45 * शम्भोरम्बिकया समं निजवपुःसंभेदसम्पादना
जृम्भिताभवसम्भवाय भवतां विस्फूर्जदाडम्बरा।
यत्रार्धे घुसृणप्रणीततिलकच्छेदच्छलात्स्वाहया
भालाग्नेरपि भाति भाति रहिता संसृज्यमाना तनुः।

[(l. 1) ॐ prefixed to शम्भोर्. —[(l. 2) °डम्भ (mislec for S'ār. म्ब)रा.

—After 464 B $S'_6$ marg.., D (after 45*) ins. :

46 *(B 540) तस्य प्रतापकमला सगर्वपदवीमगात्।
जयव्यसनिपूर्वेशविरहार्तेव भूपतेः।
(B 541ab) तद्वियोगासहा देशदेवी जयमधात्स्वयम्।

[(l. 1) D gloss शाहाभदेनप्रतापकमलाद्दृता. —(l. 2) D B -विरहान्ते (mislec. for S'ār. तें)व].

465 d) D वैष्व (mislec. for S'ār. षु)वो.
—After 465 D B $S'_6$ marg. ins. :

47* (B 542) अह्वायापह्नुतं युद्धे तद्धनुःप्रतिकूजितम्।
शोचद्भिरिवधूवर्गक्रन्दितैर्मत्सरादिव ।
(B 543) दिङ्मुखे चन्दनालेपः कीर्तिरम्बरचन्द्रिका।
धरणीरमणस्यास्य द्विषामाम्लापयन्मुखम्।
(B 544) क्षेम लक्ष्मीं प्रजाः क्षोणीपाले तन्वति तन्वति। [5]
भूमावेव स्थिता नाकभोगसौख्यमभुञ्जत।

466 a) $S'_3$ लोहेर; RSs $_{1\cdot2}$ लहर–; $S'_6$ (before corr.) प्रति° (for प्रत्य°). —b) $S'_{1\cdot2}$ K B व्य (or न्य in $S'_1$) धात्. —d) D [आ]गतास्.

शाम्यन्त्योषधयः सर्वाः शशिन्यस्तं गते सति ।
दृष्टो हि सूर्यकान्तानां रवौ याति द्युतिक्षयः ॥ ४६७ ॥

लोहरं प्रतिसन्धातुं कुद्दीनमहीपतिः ।
शौर्यशालिनमादिक्षत्ततो डामरलौलकम् ॥ ४६८ ॥

अवेष्टयत्ततो गत्वा लोहराद्रिं स सर्वतः ।
प्राणा हि स्वामिभक्तानां तृणायन्ते महात्मनाम् ॥ ४६९ ॥

असामर्थ्यान्निजं दुर्गं दुर्गेन्द्रोऽर्पयितुं ततः ।
ब्राह्मणान्व्यसृजद् दूतान् डामराधिपतिं प्रति ॥ ४७० ॥

द्विजलिङ्गान्स तान्मत्वा सारं द्रष्टुमुपागतान् ।
न्यग्रहीद्विग्रहादुग्राद् द्विजानव्यग्रमानसः ॥ ४७१ ॥

द्विजदैवतमप्येतं श्रुत्वा तदपकारिणम् ।
लोहरेन्द्रो न कोट्टाशां जीवाशां च विसृष्टवान् ॥ ४७२ ॥

पश्यन्तो मरणं स्वस्य युद्धे वाऽथ पलायने ।
क्षत्रियाणां निजं धर्ममग्रहीषुस्ततो रणम् ॥ ४७३ ॥

शरासारशिलावर्षैर्दुर्धर्षा दुर्घना इव ।
लोहराद्रेरवारोहन्नारोहंस्तु यशांसि ते ॥ ४७४ ॥

---

467 a) $S'_{2\cdot5\cdot6}$ K C D B [औ]षधयः.

468 b) $S'_{1\cdot4\cdot5}$ K D कुब्र° ($S'_{2\cdot6}$. C म्भ, $S'_3$ द्म ⌊mislec. for S'ār. द]); B (evid. emend.) कुद्बु°; D °देन-. —d) $S'_{1\cdot4\cdot5}$ (before *sec. m.* corr). K तरो (mislec. for S'ār. तो); $S'_{2\cdot3\cdot6}$ C B पुरो (for ततो).

469 b) $RSs_1$ लहरा°.

472 a) D B एनं (for एतं). —b) $S'_6$ तदुपका°; $S'_{4\cdot5}$ C °कारिणाम् (sic). —c) $S'_{2\cdot6}$ लोहरेन्द्रेण (sic); $S'_{1\cdot3-5}$ K C कोटा (K जा)शां (emended as in text with $S'_{2\cdot6}$ D B).
—After 473 ab D ins. :
48* पूर्वमेव जयोपायं क्षत्रिया निरशेपत (sic) ।

473 d) D परे (for ततो).

474 a) $S'_2$ शिला° (for शरा°); D -वर्ष- (for -वर्षैर्). —b) S' (after *pr. m.* corr.) $_{2-6}$ K C B दुर्दर्शा ($S'_{2\cdot6}$ C °र्शान् [emended as in text with D]).

विप्रकीर्णैः स पाषाणैर्लौलडामरनायकः ।
अन्तर्हितः समं कीर्त्या भावि को नाम लङ्घति ॥ ४७५ ॥

शत्रुकीर्णशिलाराशिच्छन्नो डामरलौलकः ।
यवनप्रेतसंस्कारान्न विपद्यप्यहीयत ॥ ४७६ ॥

शाहावदीनभूपालो निर्वास्यापि सुतान्निजान् ।
आकारयत्स्वयं लेखैर्निजवर्णपरिष्कृतैः ॥ ४७७ ॥

गुणैश्च वयसा तेषां ज्येष्ठो मद्रेन्द्रमण्डलम् ।
हस्सनो राजपुत्रः स प्राप तावदनङ्कुशम् ॥ ४७८ ॥

---

—c) $S_{1\cdot4\cdot5}$ (before *sec. m.* corr.) °रोहरारो° (emended as in text with $S'_{2\cdot3\cdot6}$ C D B).
—After 474 D B $S'_6$ marg. ins.:

49* (B 554) स्वं खण्डीकृत्य शैलेन विभक्तं स्वामिभक्तितः ।
प्रत्येकं शत्रवस्तेषु शिलावर्षिष्वमंसत ।

475 b) $S'_{1\cdot4\cdot5}$ K °णै रौ (K वौ mislec. for S'ār. रौ)ल–; $S'_{2\cdot3\cdot6}$ C °णैरै ($S'_3$ *sup. lin. pr. m.* र्लौ)ल– (emended as in text), cf. 468 for name लौल; K words beginning with नायकः in 475b and ending with डामर– in 476b marg. *pr. m.* —d) $S'_8$ लङ्घते.
—For 475 D B $S'_6$ marg. subst.:

50* (B 555) दृषत्सु तद्विकीर्णासु लौलडामरनायकः ।
त्रपयेव तिरोधानं समं कीर्त्यागमत्ततः ।

[(l. 1) D before *sec. m.* corr. °कीणासु].
476 b) $S'_{2\cdot3\cdot5\cdot6}$ (before corr.) K C -लोलकः. —d) $S'_2$ [अ] हीयते.
477 a) $S'_2$ शाहाभ°. —b) $S'_4$ (by transp.) निजान्सुतान्.
478 a) $S'_2$ (gram. assim.) वयसां. —b) $S'_{1-6}$ K C माहेन्द्र (emended as in text).
—For 477, 478 D B $S'_6$ marg. subst.:

51* (B 557) स्त्रीविधेयतया पूर्वं निर्वास्यापि निजान्सुतान् ।
स्वप्रज्ञापितदृष्टान्तः शाहाब्देनो महीपतिः ।
(B 558) आकारयत लेखैर्यान् स्वाभिज्ञानपरिष्कृतैः ।
तज्ज्यायान् हस्सनस्तावदापन्मद्रेन्द्रमण्डलम् ।

[(l. 2) B (evid. emend.) -दृष्टान्तः; B °ब्दीनो. —(l. 4) D B महेन्द्र– (emended as above)].

स नेत्रशुक्तिमुक्ताभिर्मुक्ताभिर्बाष्पवीचिभिः ।
श्रुत्वा तत्र पितुर्मृत्युं निवापाञ्जलिमार्पयत् ॥ ४७९ ॥

व्यावृत्य गमनेच्छायाः स्वच्छाशयममुं ततः ।
न्यवारयत्पितृव्यस्य लेखः कश्मीरभूपतेः ॥ ४८० ॥

शकादिसख्यलोभेन भृत्यानस्वानुपेक्ष्य सः ।
समस्कुरुत शाहावदीनभूमिपतिर्दिवम् ॥ ४८१ ॥

स्वःस्त्रीभोगरसेनेव गमनाय त्वरावतः ।
तस्यास्ताभिर्भवत्कार्यमशेषं निरपाद्यत ॥ ४८२ ॥

क्ष्मारक्षालक्षणामाज्ञां विचक्षणशिरोमणेः ।
तन्मन्त्रमार्जितां मौलिमूले मालां विदध्महे ॥ ४८३ ॥

प्रवासागमनाभ्यां त्वं स्वपितुः पालिताज्ञया ।
श्रीराम इव भूलोकं यशोभिः स्वैरपूपुरः ॥ ४८४ ॥

भूतो भावी च सम्मानो यद्यपि स्वगुणैस्तव ।
यौवराज्यग्रहाद्वारं लघूकुर्यास्तथापि मे ॥ ४८५ ॥

---

479 a) $S'_{4.5}$ K मु (mislec. for S'ār. शु)क्ति–. —d) D B $S'_6$ (after corr.) आर्पिपत्.

480 a) $S'_1$ व्याव्या° (by ditto.); C B व्यावृत्य; $S'_3$ °च्छात: (*sup. lin. pr. m.* °या:). —c) $S'_{4.5}$ (before corr.) K निवार°.

481 a) $S'_{1-6}$ K C -सौख्य–; D B $S'_6$ (after corr.) सख्य– (as in text). —b) D B $S'_6$ (after corr.) अपेक्ष्य. —c) $S'_2$ शाहाभ°; D °देन–.

482 a) $S'_5$ K D स्वस्त्री– (visarga ins. *sec. m.* in $S'_5$). —b) $S'_{4.5}$ K °कृत: (for °वत:. Thus marg. *sec. m.* in $S'_5$). —d) $S_{1-5.6}$ (before corr.) K C निरपद्यत (emended as in text with D B).

483 b) D -मणे. —c) D B तन्मन्त्रि–; $S'_{1.4.5}$ K D B (evid. emend.) -मानितां; $S'_{2.3.5}$ (marg. *sec. m.*)$_6$ (before corr.) C -मालि (mislec. for S'ār. जि,तां.

484 a) D B $S'_6$ marg. ( alliterative ) गमना° (for प्रवासा°,; $S'_1$ °गमानाभ्यां (sic); $S'_2$ °ग···नाभ्यां (blauk with dots). —b) D B $S'_6$ marg. पितु: पालितयाज्ञया. —d) $S'_{1-6}$ K C स्वम्; D B $S'_6$ (after corr.) स्वैर् (as in text).

स्वधैर्यं सभ्यसंयोगो नानाबन्धुसमागमः ।
तव रक्षाधिकारश्च दौर्मनस्यं विलुम्पतु ॥ ४८६ ॥

यशसेव प्रमीतानां परदेशनिवासिनाम् ।
महतां नहि जातु स्याद्विभवेन सुखोद्गमः ॥ ४८७ ॥

स्वरूपप्रतिबिम्बेन भवता स्वर्गवासिनः ।
तदुत्कण्ठाभरोऽस्माकं दर्शनेन निवार्यताम् ॥ ४८८ ॥

पुत्रः शाहावदीनस्य सोऽयमित्यन्यमण्डले ।
अङ्गुलीमुखनिर्देशः प्राकृतस्येव मास्तु ते ॥ ४८९ ॥

राज्ञां मदनुकम्प्यानां मुखप्रेक्षी भवन्भवान् ।
कश्मीरैश्वर्यमतुलं मा नैषीरल्पकं स्वयम् ॥ ४९० ॥

विभज्य भवति क्षोणीभारं मेरुगिराविव ।
सुखसम्पत्तिमतुलामनन्तद्युतिराप्नुयाम् ॥ ४९१ ॥

---

486 a) D B सत्य– (mislec. for S′ār. भ्य–). —c) D B जगद्° (for तव). —d) $S'_{1-6}$ K C विलुम्पते; D B $S'_6$ marg. विलुम्पतु (as in text).

487 c) $S'_{2\cdot3\cdot6}$ C जातः (for जातु). —cd) D B $S'_6$ marg. प्रासेन विभवेनापि महतां न सुखं भवेत्.

488 b) D -वासिना. —c) D B $S'_6$ (after corr.) त्वद्° (for तद्°).

489 a) $S'_3$ C पुनः (for पुत्रः); S′ शाहाभ°. —c) D B $S'_6$ marg. °ल्यग्रेण (for °लीमुख–).

490 a) $S'_{1\cdot4}$ राज्ञा; $S'_5$ K राज्या (emended as in text with $S'_{2\cdot3\cdot6}$ C D B. Thus marg. *sec. m.* in $S'_5$). —c) D B $S'_6$ marg. -माहात्म्यं (for °मतुलं). —d) $S'_{1\cdot4\cdot5}$ K अल्पकः ($S'_1$ K क). यम् (emended and blank filled as in text with $S'_{2\cdot3\cdot6}$ C. Thus *sec. m.* in $S'_5$); $S'_3$ अल्पकं (*pr. m. sup. lin.* °तां); D B $S'_6$ marg. °कल्पतां (for °कं स्वयम्).

491 a) $S'_{4\cdot5}$ (before corr.) K क्षोणीं; C क्षोणा-. —c) $S'_{1\cdot2\cdot4-6}$ C सुखं (emended as in text with $S'_3$ K D B).
—After 491 D B $S'_6$ marg. ins. :
52* (B 572) कीर्तिं सुरवधूगीतां पात्रे श्रीप्रतिपादनात् ।
स कर्णपूरयन्राजा माद्दृत स्वर्गमालतीः ।
(B 573) प्रिययोरावयोः स्नेहश्रुतिसौख्येन शीतलैः ।
निःश्वासैर्भूपतेः स्वीयैः स्यादरपृष्ठं च चामरम् ।
[(l. 4) M (evid. emend.) न (for च)].

येन मानेन मामन्वग्रहीत्स वसुधाधिपः ।
त्वं सञ्चरस्व तेनैव मयि पालयति प्रजाः ॥ ४९२ ॥

उदयश्रीमुखामात्यमतानुष्ठानशालिनीम् ।
ममार्थतानिषेधेन लक्ष्मीं मैव वृथा कृथाः ॥ ४९३ ॥

अजानंल्लोलकर्णत्वं राजेन्द्रकरिणामथ ।
पन्थानं लेखवाची स कश्मीराणामगाहत ॥ ४९४ ॥

पवनैः सम्मुखायातैर्झाङ्काररवधारिभिः ।
न्यवार्यतेव कश्मीरप्रवेशाद्राजनन्दनः ॥ ४९५ ॥

स विशन्नथ काश्मीरसरणीमुदजिज्वलत् ।
अमलीमसयद्राज्ञः श्रुतिं तु खलचोदना ॥ ४९६ ॥

नक्राः समुद्रमिव केचिदुदेतुकामा
वाता लतान्तमिव केचन दर्पवृत्त्या ।
दुर्मन्त्रिणो भुवनकाननचक्रवाल-
हव्याशना नरपतिं प्रविलोलयन्ति ॥ ४९७ ॥

अथ प्रविष्टे कश्मीरान् हस्सने राजनन्दने ।
कुद्देनमहीपालः पिशुनैरित्यकथ्यत ॥ ४९८ ॥

---

—After 492 D B $S_6$ marg. ins. :
53* (B 575) त्राता द्यौः शक्रराजभ्यामावाभ्यां च समं मही ।
शेषैकनाथां पाताललक्ष्मीं हसतु निःसुखाम् ।

493 c) $S'_{2\cdot3\cdot5}$ (marg.) $_6$ C स्वप्रा° (for ममा°). —d) $S'_4$ C लक्ष्मीमेव; D B नैव.

494 a) C $S'_5$ marg. लोक- for लोल-. —d) $S'_{2\cdot3\cdot6}$ C काश्मी°.

495 a) $S'_{2\cdot3\cdot6}$ C पर्जन्यैः (for पवनैः. Thus marg. in $S'_{2\cdot6}$); $S'_5$ (orig.) पवनैः (marg. पर्जन्यैः). —b) $S'_{1\cdot4}$ D झाङ्काराख° $S_{2\cdot3\cdot5\cdot6}$ K C B झाङ्काररव°; (as in text); $S'_5$ K °रार···धा° (blank with [K without] dots, $S'_5$ *sec. m.* °रारावधा°).

496 b) $S'_2$ -सरणिम् .

497 b) $S'_3$ तृणा° (for लता°); D B $S'_6$ marg. लताग्रम् ; D B $S'_6$ marg. -वेगात् (for -वृत्त्या).

498 c) $S_{1\text{-}6}$ K C कुद्म° ($S'_{1\cdot3\cdot4}$ द्म-; $S'_{2\cdot6}$ C म्भ-, mislec. for S'ār. द्द); $S'_{2\cdot3\cdot6}$ C °दीन-. —d) M (evid. emend.) [अ] बोधत (for °कथ्यत).

सर्वासामेव बुद्धीनामुपरीश्वरबुद्धयः ।
तथापि सचिवैर्वाच्यो हिताहितविनिर्णयः ॥ ४९९ ॥

पुरन्दरादिलोकेशतेजोंशाश्रयशालिनाम् ।
स्ववंश्येभ्यो महीन्द्राणामन्तरायो विलोक्यते ॥ ५०० ॥

स्पर्शनाशितया ख्याताद्भ्रातृपुत्राद्द्विजिह्मगात् ।
कृष्णसर्पादिवाश्लिष्टात् कष्टं दूरे न कस्यचित् ॥ ५०१ ॥

विभवैस्तर्प्यमाणोऽयं न च स्वीभविता तव ।
स्नेहेन सिच्यमानोऽग्निः शीतलत्वं किमृच्छति ॥ ५०२ ॥

न चिन्त्यं स्वयमेकाकी राज्ञो मे किं करिष्यति ।
हरेः पुरः सयूथोऽपि कतमो वारणेश्वरः ॥ ५०३ ॥

मद्बुद्ध्या विक्रमस्तस्य हन्यन्तामिति नोज्ज्वलम् ।
बुद्धिमानुदयश्रीस्तं स्वामिभक्त्या हि रक्षति ॥ ५०४ ॥

---

—For 498 D B S′₆ marg. subst. :
54* (B 581) प्राप्तेऽथ हस्सनेऽभ्यर्णे क्रौर्यनिर्णयवादिभिः ।
वर्णाश्रमगुरुस्तूर्णं पिशुनैरिति बोधितः ।

[ (l. 1) D य om. in -निर्णय- ].

500 c) D B S′₆ marg. नरेन्द्राणां (for मही°).

501 b) S′₁₋₆ K C रूपाद्; D B -पुत्राद् (as in text); C द्वि°; B (evid. emend.) हि (for वि°). —d) S′₂.₆ (before corr.) C दूरो; S′₅ marg. *sec. m.* दूरो; D कथं (for कष्टं).

502 a) D तर्प्यमानो.
—After 502 D B S′₆ marg. ins. :
55* (B 586) वरं हालाहलो घोरो न दुरात्मा च दुर्जनः ।
तस्य पानाद्गलत्येकः परस्य त्वखिलं कुलम् ।
(B 587) दैवाद् दूरतरं सर्पं प्रसर्पद्विषधारिणम् ।
विना दैवकृतं को नु निधौ स्थापयति स्वयम् ।

503 a) D B S′₆ marg. चायम् (for स्वयम् ).
—For 504 D B S′₆ marg. subst :
56* (B 589) बुद्धिशस्त्रस्य किं नु स्यात्परिपन्थिपराक्रमैः ।
नैतद्युक्तं संगतौ हि राजपुत्रोदयश्रियौ ।
[(l. 2) D B सौगतौ (emended as above) ].

आद्ये दर्पोदयः पक्षे दोषोद्रेकः परे यतः।
नानुग्राह्यो न चोत्सृज्यस्तव राजेन्द्र हस्सनः ॥ ५०५ ॥

न चैवंप्रायतावृत्तिं तेजस्वी स क्षमिष्यते।
यस्मिन्दहति नाम्भोधिं स क्षणो वाडवस्य कः ॥ ५०६ ॥

अतस्तस्य निरोधेन निरुत्पिञ्जसुखाः प्रजाः।
कुण्ठयन्तुतरां पूर्वभूपालोत्कण्ठितां चिरम् ॥ ५०७ ॥

प्रविष्टैरिति दुर्वाप्या निर्गताऽद्भिरिव ह्रदः।
वैरस्यमभजद्राजा खलवाक्यैः स हस्सने ॥ ५०८ ॥

पश्यञ्शृण्वन्ननुभवंस्तस्याप्युत्सेकविक्रियाम्।
भ्रातुः पुत्र इति स्नेहान्न तं राजा न्यरोधयत् ॥ ५०९ ॥

उदयश्रीरथालक्ष्य विरक्तं हस्सने नृपम्।
लौऌडामरभार्यां तद्धात्रीं समदिशत्ततः ॥ ५१० ॥

स्वामिरागादिवारूढो नाकं डामरलौलकः।
अहारयद्यशो न स्वं कुस्वामिसुखवीक्षणैः ॥ ५११ ॥

---

505 a) C S′₆ दर्पादयः; D B S′₆ marg. पक्षे द्रुतं नाशश् (for दर्पोदयः पक्षे). —b) D B S′₆ marg. चिरं नाशः (for दोषोद्रेकः). —c) D B S′₆ marg. त्याज्यस् (for [उ]त्सृज्यस्). —d) D B S′₆ marg. ततस्ते हन्त (for तव राजेन्द्र).

506 a) S′₁₋₆ K C नवै (mislec. for S′ār. चै) वं°. —b) D B S′₆ (*sup. lin.*) सहि° (for क्षमि°). —d) D च (mislec. for S′ār. स). —d) D वड°.

508 ab) S′₄.₅ (before corr.)₆ (after corr.) K D B दुर्वाक्यैर्निर्गमा°. —c) D वैरस्यवैरस्य (by ditto.); S′₃.₆ C अभर (S′₆ *sup. lin.* ज)त्.

509 ab) D °मवं त° (sic). —b) D B S′₆ marg. तस्यैवोत्सु° (for तस्याप्युत्से°). —d) D B S′₆ marg. तं ववन्ध न भूपतिः; S′₂ निरोध°.

510 a) D om. लक्ष्य. —cd) D B S″₆ marg. तद्धात्रीं लौलकवधूं समदिक्षत्तरामिति. —c) S′₃.₆ (before corr.) C लोल–.

511 a) S′₁₋₅.₆ (before corr.) K C -रागम् (emended as in text with D B). —b) S′₂.₃.₅.₆ (before corr.) C -लोलकः. —c) D B S′₆ marg. न यशो नाशयामास.

अस्माद् दुर्मनसो राज्ञो विभवाशास्तु दूरतः ।
वर्धितस्य त्वया प्राणसंशयो हस्सनस्य तु ॥५१२॥

तस्मात्त्वया निजार्थानां ग्रहणार्थं महीपतिः ।
प्रार्थनीयो यथाऽभ्येति त्वद्गृहानेष लुब्धधीः ॥५१३॥

---

512 b) M (evid. emend.) [अ]स्ति (for °स्तु).
—After 512 D B S′$_6$ marg. ins. :

57* (B 598) अतः प्रलोभ्य राजेत्थं त्वयानेयो निजान्गृहान् ।
योग्यं स्थानान्तरं नास्मद्विपन्निर्यातनाविधौ ।

[(l. 1) B [आ]नीयो.

513 d) S′$_6$ एव (marg. °ष).
—After 513 D B ins. :

58* (B 600) विश्वस्तायाः किमर्थैर्मे धर्मकामार्थहेतुभिः ।
राज्ञोऽर्पयामि तान्सर्वान्यदि मे स्यादनुग्रहः ।
(B 601) अतः स्वकीर्तये पूर्तसंमानस्फूर्तयेऽस्तु मे ।
यत्तु त्वच्चरणस्पर्शदर्शितानुग्रहं गृहम् ।
(B 602) प्रत्याहृत्य स्वयं स्वीयमोषधेरिव सद्वसु । [5]
आशाः प्रकाशयत्वर्थपतिर्भास्वानिवाभितः ।
(B 603) वदान्येन त्वयापेक्ष्यं न तु स्त्रीधनमित्यतः ।
रसाया रसमादत्ते लोकाप्यायाय भास्करः ।
(B 604) अनेन वसुना राज्ञः फलतु प्रार्थनार्थिनाम् ।
सरितां वारि गृह्णानो मेघांस्तर्पयतेऽम्बुधिः । [10]
(B 605) निधीनहिभिराविष्ट्य गोपयन्ती मया मही ।
उपहास्येत नाथेन मद्द्रव्ये दृष्टिकारिणा ।
(B 606) तथेति प्रतिसन्दिश्य सा पुंवद्धैर्यशालिनी ।
तद्बुद्धिपरितोषार्थमेवं सन्देशमाक्षिपत् ।
(B 607) एकाकी दीर्घधीक्षुद्यः किमुद्यच्छेत साहसे । [15]
कदाचिन्नोच्चरत्येव करेणैकेन तालिका ।
(B 608) सामर्षः सावलेपत्वात्कम्पनाधिपतिस्त्वया ।
साहाय्यकार्थमभ्यर्थ्यः सिद्धे कार्ये धृतौजसा ।

तत्रागतं महीपालं हनिष्यामो वयं बलात् ।
बध्नीमो वा ततो राजपुत्रो वृद्धिमुपैष्यति ॥ ५१४ ॥

अथ दैवाद्गते तस्मिन् मन्त्रे भेदं महीपतेः ।
उदयश्रीस्ततो भीतः पलाययत हस्सनम् ॥ ५१५ ॥

---

(B 609) भवतैव विधार्थेयं निराधारत्वनिष्फला ।
वाताहताश्रया द्राक्षावल्लीवान्येन भूरुहा । [20]

(B 610) उदयश्रीरिति श्रुत्वा वाचिकं मतिमानपि ।
तथैवायाचत्साहाय्यं कम्पनेश्वरलक्ष्मकम् ।

(B 611) हस्सनस्य जनन्याः स लक्ष्म्या ध्यायन्नपक्रियाः ।
तस्मिन्प्रत्यपकारेच्छुस्तद्राज्ञे विन्यवेदयत् ।

(B 612) मन्त्रिभिर्विवृतः सोऽथ गुणवत्सलमत्सरैः । [25]
अबोध्युदयभद्रस्य दुर्नयं तं नराधिपः ।

(B 613) मन्त्रिणं स्तन्यमाप्याय स्वकीयमभयाय तम् ।
राज्ञी राज्ञोऽस्य सुडाख्या पुत्रीयांचकुषी स्वयम् ।

(B 614) स पूर्वस्वामिसम्मानऋणमार्गोपलब्धये ।
हस्सनाभ्युदयाङ्गानि प्राणानपि त्वजीगणत् । [30]

[(l. 3) D °कीतये (emended as above with B); M (evid. emend.) मूर्त- (for पूर्त-); D तु (emended to [अ] स्तु with B). —(l. 5) M (evid. emend.) ओपधिम् (for °धेर् ). —(l. 7) D B वदन्येन (emended as above); D B °यापेक्ष्यं (emended as above). —(l. 10) D गृहणानो (emended as above with B). —(l. 11) M (evid. emend.) त्वया (for मया). —(l 20) M (evid. emend.) शाखिना (for भूरुहा). —(l. 22) B सहाय्यं. —(l. 25) D °वृत्तः (emended as above with B)].

514 b) D B S′6 marg. छलात्. —c) S′5 K °मे वार्थतो (for °मो वा ततो).

515 a) D B S′6 marg. इति (for अथ). —b) S′4·5 K महीपते (S′5 visarga ins. *sec. m.*).

आत्मनो वधबन्धेन मोचयन्नपराञ्जनान् ।
रसेन्द्र इव लोकेऽस्मिन् श्लाघनीयत्वमश्नुते ॥ ५१६ ॥

कर्मण्यभीक्ष्णतीक्ष्णेऽपि तथाऽऽलक्ष्य तमुद्यतम् ।
क्षमाशीलः क्षमापालो नातक्ष्णोदुदयश्रियम् ॥ ५१७ ॥

गुणैः संवृत्य रन्ध्राणि शुचितां शीलयन्बहिः ।
बिसवत्कालमनयत् पङ्कवत्सु जलेषु सः ॥ ५१८ ॥

तावद्भ्रमति यस्तोयं दूरात्स्पृष्टो हिमांशुना ।
किंस्विन्नैव तदाश्लिष्टः शशिग्रावा स्रवेदिति ॥ ५१९ ॥

---

516 a) S′$_{3\cdot5}$ (marg. *sec. m.*) C व्रत (for वध-); S′$_{1-6}$ K C बन्धे वा (emended as in text with D B). —b) S′$_{2}$ मोद (mislec. for S′ār. च)यन्; S′$_{3}$ C चोद (mislec. for S′ār. मोच)यन्. —c) S′$_{5}$ K °न्द्रं भा° (mislec. for S′ār. °न्द्र इ°).

517 a) S′$_{3-5}$ K C °ती (mislec. for S′ār. भी)क्ष्ण-. —b) S′$_{1-6}$ K C D B (gram. assim.) लक्षितम् (for [आ]लक्ष्य तम्). —d) S′$_{5}$ (before corr.) K °क्ष्णोरु (mislec. for S′ār. दु)दय-.

518 a) S′$_{3}$ D संवृत्य. —c) S′$_{1}$ व om. in बिसवत्; S′$_{2}$ हिम- (for बिस-). —d) S′$_{1-5\cdot6}$ (before corr.) K C च (emended to सः as in text with D B). —d) S′$_{5}$ (before corr.) K -वत्स (for °त्सु). —After 518 D B ins.:

59* (B 620) बुद्धेलस्वामिनः कन्यारत्नं स्वीकृत्य हस्सनः ।
अविशल्लोहरं तावान्निरगाच्च दिशां भयम् ।
(B 621) कश्मीराम्बरवद्धस्य घनस्येवोदयश्रियः ।
धीवृष्ट्या पुष्टिमभ्यायात् केदार इव हस्सनः ।
(B 622) युक्त्या मन्त्रान् व्रताथान्तराधिनेवोदयश्रिया । [5]
व्याधिनेव बहिर्भूपो हस्सनेनाभ्यभूयत ।

[(ll. 2-4) D marg. *pr. m.*].

519 a) S′$_{2\cdot5}$ K C वस (mislec. for S′ār. म)ति; S′$_{2\cdot3\cdot5}$ (before corr.) C तोये (mislec. for S′ār. यं). —b) S′$_{2}$ C सृष्टो (for स्पृ°). —c) S′$_{1\cdot4\cdot5}$ K किं···न्नैव (blank filled as in text with S′$_{2\cdot3\cdot6}$ C. Thus *sec. m.* in S′$_{5}$); D B S′$_{6}$ marg. कियन् (for किंस्विन्); S′$_{1\cdot2\cdot4-6}$ K C B °श्लिष्ट- (emended as in text with S′$_{3}$ D). —d) D B S′$_{6}$ marg. चन्द्रकान्तो वमे° (for शशिग्रावा स्रवे°).

उदयश्रीर्गन्तुकामो राजपुत्रान्तिकं ततः।
उदयश्रीः श्रुतद्रोहो राज्ञा कारां निवेशितः॥५२०॥

परीक्षितुमिवोद्युक्तैर्गुरोस्तस्य च शेमुषीम्।
सुरैरिवार्थितो राजा क्रोधाद्व्यापादयत्स तम्॥५२१॥

मथ्नन्पद्मं गजो भञ्जन् मरुच्चन्दनपादपम्।
निघ्नन्पुरुषरत्नं च राजा निन्द्यो जगत्त्रये॥५२२॥

---

520 a) D B °मना (for °कामो). —cd) D B परिहृत्य परान्मार्गान्सरला-त्रोधशङ्कया. —c) $S'_2$ visarga om. in °श्रीः.

—After 520 D B ins.:

60* (B 625) मड्वासरणिं वक्रां सिद्धिहेतुं विदन्नहः।
श्वशुरं वर्णितस्वीयरहस्यं मड्वापतिम्।
(B 626) गङ्गराजमथायाचत्तन्मार्गेण विनिर्गमम्।
अन्ते नश्यति धीः पुंसः सहस्रांशोरिव द्युतिः।
(B 627) न यद्युद्भेदयेत्कन्दकोटिं शृङ्गाटमुन्नताम्। [5]
कस्तस्यान्तर्निमग्नस्य ज्ञातुं शक्तो भवेत् स्थितिम्।
(B 628) स्वनाशशङ्कया गङ्गराजे तद्द्रोहवर्णिनि।
इद्धतेजा नृपः क्रुद्धो रुणद्धि स्मोदयश्रियम्।

[(l. 3) D अयातन्मा° (sic) (emended to अथायाचत्तन्मा° as above with M); B अयात…न्मा° ].

521 c) $S'_4$ K द्रा (mislec. for S'ār. सु) रैर्; $S'_5$ (orig.) द्रा (marg. *sec. m.* सु) रैर्.

522 b) $S'_{3,5}$ K C मरुश्च (mislec. for S'ār. च)न्दन-.

—For 522 D B subst.:

61* (B 630) वायुश्चन्दनपादपं रयभरादुन्मूलयंल्लीलया
छिन्दन्पद्ममिभो घनः परिहरन्बालातपं हेलया।
पुंरत्नं पृथिवीपतिर्गुणमणिश्रेणिश्रियां रोहणं
रोषापस्मृतिमूर्छितेन मनसा निघ्नन्न कैर्गर्ह्यते।

[(l. 1) D B -भयाद् (emended as above). —(l. 4) D B गृह्यते (emended as above)].

यशः पुरुषपुष्पाणां भुवनोद्यानवर्तिनाम् ।
सौरभातिशयं श्लाघ्यं विचिनोति मनोहरम् ॥ ५२३ ॥

विनष्टहस्तपालोऽन्धो यथातिचकिताशयः ।
उदयश्रीक्षये राजपुत्रोऽभूद्धस्सनस्तथा ॥ ५२४ ॥

प्रसादप्रीणितैः प्रायः खशराजैर्दुरात्मभिः ।
राजपुत्रो हस्सनः स हन्तुं प्रत्यर्पितः प्रभोः ॥ ५२५ ॥

उत्पिञ्जे गलिते शत्रुवर्गेऽप्याशाच्युते सति ।
स तिग्मतेजा लोकानामालोकश्रियमाययौ ॥ ५२६ ॥

वितस्तायां स्वनामाङ्का पुरी तेनाथ निर्मिता ।
उच्छ्रितैः कनकच्छत्रैर्द्यामुल्लुण्ठयति स्म या ॥ ५२७ ॥

---

523 a) $S'_6$ C वच: (mislec for S'ār. यशः).
—For 523 D B subst. :

62* (B 631) भुवनोपवनेषु मानुषप्रसवानामथवा प्ररोहताम् ।
विचिनोति मनोहरं विधिर्विलसत्सौरभसम्पदुज्ज्वलम् ।

524 a) $S'_{2\cdot3}$ C -पादो (for -पालो).
—For 524 D B subst. :

63* (B 632) हस्सनो नष्टधैर्यश्रीरुदयश्रीमतं विना ।
विनष्टहस्तपालोऽन्ध इव पातमथान्वभूत् ।

—After 63* D B ins. :

64* (B 633) पक्षिशाव इव क्रूरकरकाभग्नपक्षतिः ।
पर्यन्तवृत्तिभिः क्रूरैर्हस्सनोऽथ न्यरुध्यत ।

525 d) D B $S'_6$ (after corr.) हन्त; $S'_{2\cdot4\cdot5\cdot6}$ (before corr.) K C $RSs_2$ प्रत्यक्षि (mislec. for S'ār. र्पि)तः; $S'_3$ प्रती (marg. *pr. m.* त्य) क्षितः.

526 b) D B च (for [अ]पि). —c) $S'_{1-6}$ K C स ($S'_6$ C म mislec. for S'âr. स) ($S'_{3\cdot6}$ [before corr.] C तिः स<)तिस्स (mislec. for S'ār. ग्म)ते°. —d) D B $S'_6$ marg. आदधौ (for °ययौ).

527 d) $S'_{1\cdot4\cdot5}$ K उण्ठ ($S'_4$ K ग्ध mislec. for S'ār. ण्ठ)यत⋯स्मि (sic) (emended and blank filled as in text with D B); $S'_{2\cdot3\cdot5}$ (*sec. m.*)$_6$ C उद्धसति या श्रिया (for उल्लुण्ठयति स या. Thus marg. in $S'_6$).

प्रत्यब्दं जलमालक्ष्य दुर्भिक्षक्षपितायुषम् ।
मासि भाद्रपदेऽकार्षीत् स सत्रं भूरिदक्षिणम् ॥ ५२८ ॥

साधुसूक्तिसुधास्नानात् कर्णाभ्यर्णतले कचैः ।
ध्रुवं धवलिमापेदे वार्धके चास्य भूपतेः ॥ ५२९ ॥

भूषणं निजवंशस्य पूषणं धरणेरसौ ।
शत्रुश्रीदूषणं पुत्ररत्नं न च स लब्धवान् ॥ ५३० ॥

योगिनो ब्रह्मनाथस्य कश्मीरानागतस्य सः ।
प्रसादेन महीपालः सन्ततिं प्राप्तवांश्चिरात् ॥ ५३१ ॥

---

528 b) $S'_{2\cdot3\cdot6}$ C -क्षयि ($S'_6$ marg. पि)ता°; $S'_1$ (before *pr. m.* corr.) °शयम् (for °युषम्). —d) $S'_{4\cdot5}$ (before corr.) सूत्रं.

529 d) D B [अ]थ (for च); $S'_6$ चा (*sup. lin.* वा)स्य.

530 c) D B वैरि- (for शत्रु-); $S'_2$ -दूषणो.
—After 530 D B ins.:

65* (B 640) आयुर्वायुचलद्वीचिचञ्चलं कलयन्नथ ।
सर्वाग्रहारनिर्माणमकरोत्पुत्रलिप्सया ।

531 b) $S'_3$ C °रादा° ($S'_3$ *sup. lin. pr. m.* ना); $S'_4$ °रावा° (sic). —St 531, in addition to its revised form 66* here, is read after 67* in D with *v. l.* कश्मीरागतस्य सः (submetric).
—For 531 D B subst.:

66* (B 641) योगिनं ब्रह्मनाथाख्यं तत्कर्मप्रेरणादिव ।
कश्मीरानागतं राजा पुत्रार्थ्येवमभाषत ।

—After 66* D B ins.:

67* (B 642) मया वैरिवरान्नीत्वा कारागारकुटुम्बिताम् ।
निवारितं विलोलत्वं नैसर्गिकमपि श्रियः ।
(B 643) यथापराधं दण्डेन हरता धर्मविप्लवम् ।
प्रजा अपक्षपातेन स्वप्रजा इव पालिताः ।
(B 644) नीतश्चिराय निर्मथ्य विपश्चिज्जनवारिधिम् । [5]
कियंत्रापि मयोशोत्र मैत्रीं शास्त्रमणिप्रभा ।
(B 645) इति मे कृतकृत्यस्य शोकशङ्कुरयं परम् ।
प्राज्यसाम्राज्यभारस्य वोढा नास्ति कुलाङ्कुरः ।

अन्वयाभरणं देवी पितुरानन्दपारणम् ।
तमोहरणमर्यन्धङ्करणं सुषुवे सुतम् ॥ ५३२ ॥

शृङ्गारमङ्गलावासमवलोक्य वपुः शिशोः ।
शृङ्गार इति नामास्य व्यधाद् भूलोकवासवः ॥ ५३३ ॥

हर्षाददिशति क्ष्मापे बन्धमुक्तिं तदुत्सवे ।
अन्वभावि तदा चित्रं बन्धो नौसेतुभिः परम् ॥ ५३४ ॥

---

(B 646) इति श्रुत्वा वचस्तस्य वंशच्छेदतमोमुषम् ।
दर्शयन्दशनज्योत्स्नां योगी तं प्रत्यभाषत । [10]
(B 647) मा विषादं कृथा राजन् पुत्रानुत्पत्तिहेतुकम् ।
नहि किञ्चित्कदाचित्स्याद् दुरापं पुण्यशालिनाम् ।
(B 648) पुत्रोत्पत्तिनिमित्तं मे योगिनोऽप्यानुषङ्गिकम् ।
किञ्चित्सञ्चितमस्त्येव तत्तवास्तूपकारकृत् ।
(B 649) गुणैः सममिमं मे च कश्मीरागमनोद्यमम् । [15]
फलयत्वेव महिषी भुञ्जाना कुलिकामिमाम् ।
(B 650) कुलतन्तौ समुत्पन्ने त्रिलोकाभयलञ्चके ।
नरोत्तमो जगत्त्राणचिन्तातानवमश्नुताम् ।
(B 651) इत्यूचुषोऽथ योगीन्द्रादादाय गुलिकां नृपः ।
अभोजयत्स महिषीं चरुं दशरथो यथा । [20]
देवीमभोजयन्मूर्तां प्रसादपदवीमिव ।

[ (l. 6) B (evid. emend.) कियंतोपि मया···मै°; M (evid. emend.) कियंतोपि मया स्वीयां मै°. —(l. 14) D तत्तु (mislec. for S'ār. त्त) वा°. —(l. 16) B (evid. emend.) गुलि°. —(l. 19) B यागीन्द्राद् (sic) ].

532 b) $S'_{1\cdot4\cdot5}$ (before corr.) -पारणाम् (sic). —cd) D B $S'_6$ (after corr.) अर्यन्धक°.

533 b) D B (by transp.) शिशोर्वपुः.

534 b) $S'_{1\cdot4\cdot5}$ D B बद्ध–; $S'_2$ बन्धु (*sup. lin.* द्ध); $S'_{2\cdot3\cdot6}$ C बन्ध– (as in text). —d) D B $S'_6$ marg. क्षणात् (for परम्).
—After 534 D B $S'_6$ marg. ins. ;
68* (B 655) यो मातुलसुतो देव्या भाण्डागारिक उद्भटः ।
तत्प्रियां सेवतां राजा निन्ये धात्रीषु मुख्यताम् ।

अथ द्वितीयपुत्रं सा देवी हैबतसंज्ञितम्।
असूत कान्तिसन्तानतर्ज्यमानसुधाकरम् ॥ ५३५ ॥

चन्द्रस्येव कलङ्कोऽभूदयं दोषो महीभुजः।
कुलागतां महीं यत्स वास्तव्यानामपाहरत् ॥ ५३६ ॥

भाद्रे कृष्णद्वितीयायां पञ्चषष्ठे स वत्सरे।
अस्तं जगाम राजेन्दुः कुद्दीनमहीपतिः ॥ ५३७ ॥

---

[(l. 2) M (evid. emend.) देवतां. In S'ār. दे and से are confounded].

535 b) D हैभत–; RSs₂ हैर्थ (mislec. for S'ār. ब)त–.
—After 535 D B ins.:

69* (B 557) न कस्य वस्तुनोऽलक्षि सुभिक्षश्रीः पदे पदे ।
तस्मिन्नक्षितरि क्षोणीमन्यत्रारिभयाज्जनैः ।
(B 558) धनुर्विनामितं तेन पश्यन्तो नैव कुत्रचित् ।
प्रणतिं वैरिणस्तस्य कस्मादप्यध्यगीषत ।
(B 659) दैवी नीतिरभूत्तस्मिन् पृथ्वीं पालयति प्रभौ । [5]
उर्विजखंजताख्यानं प्रत्युतास्य तिरस्क्रिया ।

[(l. 1) D B सुभिक्ष्य (emended as above); D one पदे om. hapl. —(l. 3) D B विनमितं (emended as above with M); D पश्यन्ते (emended as above with B). —(l. 4) D B °धिगीषत (emended as above with M)].

536 ab) D B [अ] यं दोषोभूत्तु (for [अ] भूदयं दोषो). —d) $S'_3$ C सवास्तव्याम् (for वास्तव्यानाम्).
—After 536 D B ins.:

70* (B 661) अकलङ्कः स राजेन्दुर्विकसत्कुमुदाकरः ।
नाम्नामनाम्नि धाम्न्यापतत्परधामविलीनताम् ।
(B 662) चिरभुक्तां भुवं मत्वा सोऽस्पृश्यां भाविकिल्बिषैः ।
जगाम त्रिदिवं राजा ध्रुवं भोक्तुं सुरस्त्रियः ।

537 a) $RSs_{1\cdot2}$ -द्वितीयस्यां. —c) $S'_{2\cdot4}$ $RSs_2$ राजेन्द्रः (mislec. for S'ār. न्दुः). —d) $S'_{1-6}$ K C कुद्ध– ($S'_3$ द्ध, $S'_{2\cdot5}$ K ध्य, $S'_6$ C म्भ) (mislec. for S'ār. द्द); D कु (in S'ār.) ब्ब–; B (evid. emend.) कुद्बु; $S'_2$ after -महीपतिः (figure) 19 (to denote Kuddadina 19th ruler).

राज्ञी शोकातुरा राजपुत्रौ बालाविति प्रजाः ।
अभूवंश्चकिताः सर्वा विनाथवदथाधिकम् ॥ ५३८ ॥

देव्या वाष्पजले शोकवर्षजाते पृथौ सति ।
परस्परममात्यानां मात्स्ये न्यायेऽभवद्रुचिः ॥ ५३९ ॥

अलं शोकनिवेशेन धैर्यमत्रोचितं यतः ।
रुन्धते मलिनात्मानः क्ष्मामशूरामराजकाम् ॥ ५४० ॥

इति प्रबोध्य सुभटां देवीसुद्दकसाहकौ ।
ज्येष्ठं सेकन्धरं पुत्रं महाराज्येऽभ्यषिञ्चताम् ॥ ५४१ ॥

राज्ञ्या मतेनोद्दकोऽथ साहपुत्रं महम्मदम् ।
स्वजामातरमप्येष सजानिमदहच्छलात् ॥ ५४२ ॥

सूक्ष्मानत्ति तिमिर्महान् स्वकुलजान् व्याधादजानन्वधं
स्वामस्वामपि मक्षिका वत मधुग्राहाद् भविष्यद्ध्रुवा ।
लक्ष्मीलोभभरेण मोहितधियः कल्पाननल्पान् स्थितिं
जानन्तोऽतिजडा न किं कुचरितं कुर्वन्ति हा हन्त हा ॥५४३॥

---

538 a) D B शोकान्त (mislec for S'ār. तु)रा; $S'_6$ शोकातु (*sup. lin.* न्त)रा. —d) D B $S'_6$ marg. अथ वैनाथ्यशङ्कया.

539 a) D B $S'_6$ marg. विषादतोये तु (for वाष्पजले शोक-). —b) D B $S'_6$ marg. बहुलत्वमुपेयुषि.

540 a) D B $S'_6$ marg. विषादनिर्बन्धैर् (for शोकनिवेशेन). —b) D B $S'_6$ marg. धैर्यस्यै (D स्ये)व क्षणो ह्ययम्. —c) $S'_{2.6}$ रुन्धन्ते.

541 a) D प्रति (for इति); D anusvāra om. in सुभटां. —b) $S'_{4.5}$ K $RSs_2$ -साहसौ. —c) $S'_6$ सि (before corr. से)कन्धरं; C शे (Bengāli speech-habit)कन्धरं; D से (B सि)कन्दरं. —d) D महाराजे; $S'_{4.5}$ [अ]भिषि°; $S'_5$ after °षिञ्चताम् *int. lin. sec. m.* युग्मं; K words beginning with महा° in $541^d$ and ending with -पुत्रं in $542^b$ marg. *sec. m.*

542 a) $S'_{2.3.6}$ C राज्ञो; $S'_{4.5}$ राज्ञा (after corr. °ज्ञो in $S'_5$); D B देव्या for राज्ञया); $S'_4$ [उ]न्दकां. — b) D B $S'_6$ marg. साहिं महम्मदमुद्भटम्; $S'_2$ मुहम्मदं. —c) D B $S'_6$ marg. जामातरमपि क्रूरः.

543 a) $S'_{1.4}$ K आधान°; $S'_5$ आ (after corr. अं)धान°; $S'_{2.3.6}$ (before corr.) C अन्धान° (emended to व्याधाद° as in text with D B).

श्रीशोभाया महादेव्याः श्लाघ्या लक्ष्मीरभूत्तराम् ।
क्ष्मां हेमलिङ्गैर्या पुण्यलिङ्गैर्या स्वैरमण्डयत् ॥ ५४४ ॥

एतद्वन्धुघ्नमेषोऽपि मां हनिष्यति निश्चितम् ।
इत्युद्दको राजपुत्रं विषेणाथ व्यपादयत् ॥ ५४५ ॥

निजयैव कृपाण्याहं स्वं छिन्द्यां कण्ठमेतया ।
यद्यहं त्वां निरुन्ध्यां वा हन्यां वेत्यथ संविदा ॥ ५४६ ॥

विश्वास्य साहकं वीरमुद्दकोऽथ व्यपादयत् ।
आसन्नविनिपातानां द्रोहा दूता हि दुर्धियाम् ॥ ५४७ ॥

यथा भ्रातुस्तथा स्वस्य वधं सम्भावयन् नृपः ।
प्रौढीभूतस्ततो वृद्धिं स्वं पक्षं किञ्चिदानयत् ॥ ५४८ ॥

भौट्टाक्षित्वाऽऽगतो द्दतोऽसहमानोऽन्यवैभवम् ।
श्रीशोभाभ्रातरं खुञ्ज्याराजमुद्दोऽवधीत् ततः ॥ ५४९ ॥

---

—b) D B S′6 marg. पीडां क्षौद्र (D त्र)हरान्नरादविदुषी स्वां मातरं पुत्तिका. —c) D B S′6 marg. प्राय: श्रीलवलोभ– (for लक्ष्मीलोभभरेण); M (evid. emend.) स्वस्य (for प्राय:); S′3.5 (marg. *sec. m.*) C °नलस्योत्थितिं; D B S′6 marg. °न्तरस्थायितां (B °नो); S′6 (conflated) °न्तरस्योत्थितिं (for °ननल्पान्स्थितिं); S′2 °ल्पा स्थि°. —d) S′2.5 (marg. *sec. m.*) [अ]पि (for [अ]ति); S′1.4 कुचरितं कुचरतिं (by ditto. and metathesis); D B S′6 marg. मन्वाना दुरितं कियन्न जडिमग्रस्ता विदध्युः खलाः.

—After 543 D B S′6 marg. ins. :

71* (B 670) शोभानाममहादेव्याः सोऽधिविन्नां महीं व्यधात् ।
प्रतापहेम राजा तु नाधिवेदनिकं ददौ ।

[(1. 2) D B -वेदनिकां (emended as above with M)].

544 ab) D B S′6 marg. शोभादेव्यास्तदा लक्ष्मीः स्तुत्य (B S′6 ति) त्वमगमत्तराम्. —c) S′1.2.5 (before corr.) K क्षमा.

546 c) D त्वा.

547 a) S′6 साहसं (marg. °कं). —d) S′5 after दुर्धियाम् *int. lin. sec. m.* युग्मं.

548 d) D B S′6 anusvara om. in स्वं.

549 a) D B भोट्टाञ्. —c) S′2 युञ्ज–; S′3 खञ्ज्या–; S′4 खुञ्ज्य–; D B खुञ्ज–; S′6 खुञ्ज (before corr. °ञ्ज्य–); K words beginning with खुञ्ज्या in 549c and ending with सेवकं in 550a marg. *pr. m.*

आदिशन् सेवकं स्वं स द्वारोत्पिञ्जाय निम्मकम् ।
राज्ञोऽपि प्रणयं त्यक्त्वा होलडामगमन्मदात् ॥ ५५० ॥

तच्छ्रुत्वा लब्धराजाद्या भूपतेरनुयायिनः ।
योद्धुं बद्धोद्यमाः पद्मपुरधन्वनि धन्वनः ॥ ५५१ ॥

प्रत्यासन्नविनाशानां प्रायो मतिमतामपि ।
पिशाचादिभ्रमो नूनं स्वच्छायास्वपि जायते ॥ ५५२ ॥

उद्दसैन्यैस्ततो योद्धुं वल्लामठमुपागतैः ।
पारेवितस्तं महिषीष्वश्वभ्रान्त्या पलाय्यत ॥ ५५३ ॥

आवितस्तापुरं रात्रौ तमनुद्रुत्य भूपतिः ।
व्यावर्तताथ तं बद्ध्वा नगरोत्पिञ्जशङ्कया ॥ ५५४ ॥

---

550 [b]) $S'_{3\cdot5}$ (marg. *sec. m.*) C °ञ्जानि मम्मकं. —[d]) $S'_3$ C होलराम्.
—For 550 D B $S'_6$ marg. subst. :

72* (B 677) गूढां नृपौरुषं राजमात्रा बोधित उद्दकः ।
होलडामगमत्क्रुद्धस्ततो योद्धुमथोद्धतः ।

[(l. 1) B (evid. emend.) -पौरुषैः].

551 [a]) $S'_{2\cdot3\cdot6}$ C B लद्द- (for लब्ध-); D om. लब्ध-; $S'_{4\cdot5}$ (before corr.) -राज्याद्या. —[d]) $S'_2$ दध्वनुः; D B M धन्वनि.

552 [bc]) K words beginning with प्रायो in 552[b] and ending with नूनं in 552[c] marg. *pr. m.*

553 [a]) $S'_{4\cdot5}$ (before corr.) K उत (mislec. for S'ār. द्द); $RSs_2$ उन्द-; $S'_{1-6}$ K C यतो; D B ततो (as in text). —[b]) $S'_{1\cdot4\cdot5}$ K व···मु° (blank filled as in text with D B); $S'_2$ (?)$._{3\cdot5}$ (*sec. m.*) $_6$ (before corr.) C बद्धोद्यमु° (for वल्लामठमु°). —[c]) D -वितस्तां.

554 [b]) K °श्रु (mislec. for S'ār. द्रु)त्य. —[c]) $S'_{1\cdot3-5}$ K C व्यवर्तत (emended as in text with $S'_{2\cdot6}$ D B).
—After 554 D B $S'_6$ marg. ins. :

73* (B 682) मनोविशालं गगनं पटहैस्तर्जयन्निव ।
स प्राविशत्पुरं राजा हर्षश्च हृदयं विशाम् ।

—After 73* D B $S'_6$ marg. ins. :

तं वध्यमपि कारायां कारुण्यात्तु नृपोऽक्षिपत् ।
उद्दकस्तु स विश्वस्तद्रोहपापमलीमसः ॥ ५५५ ॥

शङ्कमानो वधं भूयात् करुणाकोमलादपि ।
निजयैव कृपाण्याथ स्वगलच्छेदमाचरत् ॥ ५५६ ॥

पत्रिराज इव व्यालान् सृगालानिव केसरी ।
पालान् धरणिपालः स कालान्तिकमथानयत् ॥ ५५७ ॥

राज्यं शौर्यं वयस्तेजो निर्नियन्त्रणता तथा ।
तदा तथाऽभवद्राज्ञः पश्चाश्रितपसः फलम् ॥ ५५८ ॥

हर्तुं राज्ञां ततं दर्पतिमिरं नृविकर्तनः ।
यात्रामसूत्रयच्चित्रां गोत्रभिद्भयदां ततः ॥ ५५९ ॥

---

74* (B 683) मदज्वरोऽद्भुतः पालपशूनामेवमप्यभूत् ।
आश्रयन् स्तब्धतां येन तच्छिरांसि तदा चिरम् ।
(B 684) कदाचित् सह तैः पालकुञ्जरैर्मदघूर्णितैः । [5]
पलङ्कमाविशद्राजसिंहः सन्नखरद्युतिः ।
(B 685) तत्र पालोत्तमाङ्गानि वपुश्चक्रान्महीपतिः ।
शरावानिव सूत्रेण कुम्भकारोऽसिनाच्छिनत् ।

[(1. 2) D आश्रयं (emended as above with B). —B reads 557 after 74*].

555 a) K वश्य (mislec. for S′ār. ध्य)म् .

556 c) D B $S'_6$ (after corr.) स (for ⌊अ⌋थ).

557 a) D B पक्षि– (for पत्रि–). —b) C (Bengali speech-habit) B श्रृगा°. —B shifts 557 cf. v. l. 74*.

558 a) $S'_{2\cdot3\cdot6}$ C वपुस् (for वयस् . Thus *sup. lin.* in $S'_6$). —b) $S'_{1\cdot4\cdot5}$ K D निर्निर्य° (by syll. contam.). —c) D B $S'_6$ marg. प्राक्कृतस्या° (for तदा तथा).

559 a) $S'_{1-6}$ K C हन्त; D B हर्तुं as in text; $S'_{1\cdot4\cdot5\cdot6}$ (after corr.) K D B ततो (emended to °तं as in text with $S'_{2\cdot3}$ C). —b) $S'_{1\cdot4\cdot5}$ K द्र (or स्व in $S'_1$) य···नृपः (emended and blank filled as in text with D B); $S'_{2\cdot3\cdot6}$ C खण्डयन्नृपः (for नृविकर्तनः). —c) $S'_{2\cdot3\cdot6}$ (before corr.) C चित्रं. —d) D B (alliterative) -त्रासदायिनीम् (for भयदां ततः).

विश्वं रञ्जयता तस्य प्रतापेन प्रथीयसा ।
राजत्रीनखलक्ष्मश्रीः पाण्डिमानमवापिता ॥ ५६० ॥

तदैव हीनाभरणामपालकतया युताम् ।
म्लेच्छराजो व्यधाड्ढिल्लीं विधवामिव लुण्ठयन् ॥ ५६१ ॥

ततः प्रत्याव्रजन् म्लेच्छराजः कश्मीरभूपतेः ।
शङ्कमानो गजेन्द्रौ द्वावुपायनमचीकरत् ॥ ५६२ ॥

हस्तिद्वयगलद्दानराजिव्याजात्स्वयं व्यधात् ।
देशसीमाविभागं स कश्मीराधिपतेरिव ॥ ५६३ ॥

हस्तिद्वये समारूढे हिमाद्रिशिखरश्रियि ।
विन्ध्यवृद्धिभ्रमाद् विन्ध्यनियन्ता कोपमागमत् ॥ ५६४ ॥

---

—After 559 D B $S'_6$ marg. ins.:

75* (B 691) ऊढं तत्सेवकक्षत्रच्छत्रशेषफणाशतैः ।
स व्यधादम्बरारोहि रजो भूमण्डलान्तरम् ।

[(l. 1) D B रू (mislec: for S'ār. ऊ) ढं].

560 a) D B $S'_6$ (after corr.) रञ्जयतस् (gram. assim.). —c) D B $S'_6$ marg. द्वेधियोपिन्नखाङ्कश्रीः. —d) D B $S'_6$ (after corr.) अवाप्यत (for °पिता).

561 $S'_{2\cdot3\cdot6}$ C दी (mislec. for S'ār. ही)ना°. —c) $S'_3$ C डिह्लीं. —d) $S'_3$ blank for मिव.

—For 561 D B $S'_6$ marg. subst.:

76* (B 693) तदैव मेरतिमिरो जेतुं त्रीञलधीनपि ।
प्रस्थितः स्थितसत्कीर्तिः स्वयमेवोत्तराधिपः ।
(B 694) संत्यक्ताभरणां दीनामपालकतया युताम् ।
तदा ढिह्लीमुदीचीशो विधवामिव स व्यधात् ।

[(l. 1) B (evid. emend) मीर–. —(l. 2) D B प्रास्थितः (emended as above)].

562 ab) D B $S'_6$ marg. स विघ्नकरणाभावात्तुष्टः (for ततः प्रत्याव्रजन्म्लेच्छराजः). —b) D B $S'_6$ marg. (alliterative) भूभुजे (for °पतेः). —cd) D B $S'_6$ marg. उपदां व्यसृजत्तस्मै हस्तिद्वयमुदक्पतिः.

563 d) $S'_{1\cdot4\cdot5}$ K पते··· (blank filled as in text with D B); $S'_{2\cdot3,5}$ (*sec. m.*) $_6$ (before corr.) C °तेः किल.

नागौ कोपमगातां तौ वितस्तातरणक्षणे ।
प्रतिविम्बं निजं दृष्ट्वा प्रतिहस्तिभ्रमं गतौ ॥ ५६५ ॥

राजस्त्रीस्तनसौन्दर्यचौर्यकारिकटोत्कटौ ।
तौ गजौ भूमिपालेन वारीकारां प्रवेशितौ ॥ ५६६ ॥

वदान्येन नरेन्द्रेण सुवर्णपरिपूरिताः ।
नैवार्थिनः परं देशो निजोऽपि प्रव्यधीयत ॥ ५६७ ॥

यथाकामार्पणप्रीतयाचकस्तुतिलज्जया ।
विनमन् सङ्कुचन् हस्तस्तस्य दानक्षणेऽभवत् ॥ ५६८ ॥

दानं वर्णयितुं तस्य शक्यते नैव केनचित् ।
पाणिरूपमधः पद्मं यत्रोपरि जलं सदा ॥ ५६९ ॥

सदा दानाम्बुसेकाद् यन्न प्रारोहद्यवः करे ।
खड्गत्सरुविमर्दानां मन्ये तत्र निमित्तताम् ॥ ५७० ॥

---

565 a) $S'_3$ सागौ (sic); $S'_2$ मार्गे (for नागौ); $S'_{1\cdot4\cdot5}$ (before corr.) K तां (for तौ). —c) $S'_5$ K दि(sic)ष्ट्या (mislec. for S'ār. ष्ट्वा). —After 565 D B $S'_6$ marg. ins. :

77* (B 699) दिदृक्षयैव करिणो राजधान्यां महीपतेः ।
नोच्चं शिरोऽभवत्तस्य तत्तप्त्या तिमिरादपि ।

566 a) D B $S'_6$ marg. सुन्दरी– (for राजस्त्री–). —b) $S'_5$ (before corr.) K चौरि–.

567 a) C वदन्येन. —c) D B $S'_6$ marg. राज्य– (for देशो). —d) $S'_{1\cdot4\cdot5}$ K ⌊अ⌋प्यथ विधीयत (emended as in text with $S'_{2\cdot3\cdot6}$ C); D B $S'_6$ marg. -स्थितिः स्वा च (for निजोऽपि प्र°).

568 ab) D B $S'_6$ marg. यथेष्टलाभसंपत्तिप्रीणितार्थिस्तवैरिव. —d) D B $S'_6$ marg. दानकालेऽभवत्प्रभोः.

569 cd) D B $S'_6$ marg. दानाम्बु नित्यं यत्रोर्ध्वं पाणिपद्मोऽर्थिनामधः.

570 c) D -स्त (by metathesis for त्स)रु–.
– After 570 D B ins. :

78* (B 705) अवाच्या सौभगश्लाघा श्रीसेकन्दरभूपतेः ।
त्यक्तापि यं स्वयं लक्ष्मीर्भूयोभूयः समाश्रिता ।

अनेके यवना दानप्रसिद्धं तमथाश्रयन् ।
विहायापरभूपालान् पुष्पाणीवालयो द्विपम् ॥ ५७१ ॥

प्रजापापविपाकेन ततो यवनदर्शने ।
वालस्येव मृदि क्षोणिपते रुचिरवर्धत ॥ ५७२ ॥

दीप्तेन्दुरिव ऋक्षाणां तेषां बालोऽपि विद्यया ।
यवनानामभूज्ज्येष्ठो मेरसैदमहम्मदः ॥ ५७३ ॥

अनमद्भृत्यवच्छिक्षां शिष्यवन्नित्यमग्रहीत् ।
दासवच्च पुरो नीत्या राजा तत्र न्यविक्षत ॥ ५७४ ॥

---

(B 706) दानोद्यमपराद्राज्ञः स्फुरन्मुखरुत्रः पुरः ।
कमला दानभीत्येव पश्चादपि पलायत ।

(B 707) आजीवमेव तिष्ठन्ती निन्द्या श्रीस्तस्य तूत्तमा । [5]
सान्यजन्मस्वपि प्रत्ता यद्वाग्देवीव भाविनी ।

[(l. 1) B (evid. emend.) -सिकन्दर-. —(l. 2) B (evid. emend.) त्यक्त्वा°. —(l. 5) D निद्या (emended as above with B). —(l. 6) D B मा (mislec. for S'ār. सा)न्य°; M (evid. emend.) अन्य- (for सान्य-)].

571 a) D B अनेका; $S'_2$ अनेक-. —ab) D B $S'_6$ (after corr.) °चार्या दानोद्रिक्तं तमा° (for दानप्रसिद्धं तमथा°). —c) D B पर (for ⌊अ⌋ पर-).

572 c) $S'_2$ मृधि; $S'_{2\cdot3}$ D क्षोणी-; C क्षौणि-. $S'_{1-6}$ K C transp. 571 and 572.

573 a) D B $S'_6$ marg. भासे° (for दीप्ते°); K द (mislec. for S'ār. ऋ)क्षा°. —c) D B $S'_6$ marg. ज्यायान् (for ज्येष्ठो). —d) B (evid. emend.) मीर-; $S'_3$ -देश्यो; $S'_{4\cdot5}$ K C -देशं (prob. mislec. for S'ār. -सैद-); $S'_2$ (evid. emend.) मुहम्मदः.

574 d) M (evid. emend.) तस्य (for तत्र).
—For 574 D B $S'_6$ marg. subst. :

79* (B 711) अनंसीदग्रहीच्छिक्षां पुरो नम्रो न्यविक्षत ।
विनयं शिष्यवत्तस्य न को भूमिपतिर्व्यधात् ।

मरुद्भिरिव वृक्षाणां शालीनां शलभैरिव।
कश्मीरदेशाचाराणां ध्वंसोऽथ यवनैः कृतः॥५७५॥

स्वामिनो दानमानाभ्यां वैशद्यगुणवत्तया।
कश्मीरानविशन् म्लेच्छाः सुक्षेत्रं शलभा इव॥५७६॥

उदभाण्डपुराधीशं दृप्तो जातु जयन्नृपः।
श्रीमेरां तत्सुतां प्राप मूर्तामिव जयश्रियम्॥५७७॥

अवातरच्छाहिकुले नूनं सा कापि देवता।
योजयिष्यति तत्पुत्रः कश्मीरान् म्लेच्छनाशितान्॥५७८॥

श्रीजैनोल्लाभदीनाख्यो मूर्तो धर्मः कलावपि।
राजापि योगिराजोऽयं राजचूडामणेः प्रियः॥५७९॥

---

575 [cd]) D B $S'_6$ marg. तन्मतस्थै: खलैश्चक्रे भङ्ग: कश्मीरसंविदाम्.

576 [b]) $S'_{2\cdot3}$ C वैशद्या (sic); $S'_{2\cdot3}$ C वृ (prob. mislec. for S'ār. व) त्तया; K -वर्त(mislec. for S'ār. त्त)या; D B $S'_6$ marg. ख्यातैर्देशगुणैरपि.

—After 576 D B $S'_6$ marg. ins. :

80* (B 714) विद्वानभ्यासबोधाभ्यां विद्यामिव विशांपतिः।
स लक्ष्मीं त्यागभोगाभ्यामशोभयदवीवृधत्।

[(l. 1) D B एव (emended as above with M)].

577 [b]) $S'_{3-5}$ K C तृ (mislec. for S'ār. दृ)प्तो.

—For 577 D B $S'_6$ marg. subst. :

81* (B 715) शाहिभङ्गपतिं जित्वा पिरुजं स महीपतिः।
मेरादेवीं महीपालात्प्राप्तवान्प्राभृतं ततः।

578 [a]) D B $S'_6$ *sup. lin.* तत्र (for शाहि–); $S'_{4\cdot5}$ शालि– (for शाहि–. Thus marg. *sec. m.* in $S'_5$). —[c]) D B $S'_6$ marg. कश्मीरान् (for तत्पुत्र:). —[d]) D B $S'_6$ marg. नष्टांस्तन्नन्दनो यत:.

579 [a]) D °ल्लाव°; $S'_2$ D °देना°; $S'_{1\cdot4}$ (after corr.) $_5$ (before corr.) K °ख्य° (emended as in text with $S'_{2\cdot3\cdot6}$ C D B). —[b]) D B इव(for ⌊अ⌋पि). —[c]) $S'_5$ (orig.) योग– (*sec. m.* °गि–); D B यो (for ⌊अ⌋यं).

—After 579 D B ins. :

82* (B 718) यवना गुरवो भृत्याः सेवका वल्लभास्ततः।
बान्धवाश्चाभवंस्तस्य काकाः पिकशिशोरिव।

केनापि रससिद्धेन दत्तस्तोकरसो नृपम् ।
रससिद्धिं वदन् धूर्तो महादेवाभिधोऽभ्यधात् ॥ ५८० ॥

सदा राज्ञि महीभारोद्वहनादनुरोधवान् ।
अदान्मेरुर्महादेवरूपेण द्रविणं बहु ॥ ५८१ ॥

रसः सिद्धप्रसादोऽथ महादेवस्य हीनताम् ।
अगमन्नतु कश्मीरनिवासविषये मनाक् ॥ ५८२ ॥

रससिद्धिभ्रमार्थं स कृत्वा दृग्वन्धमौषधैः ।
हेम स्वं मूषिकामध्ये चिरमासीत्किरन्किल ॥ ५८३ ॥

प्राज्ञेन ज्ञापितो राज्ञा तच्छद्म स्वयमेकदा ।
अकीर्तिश्रवणाद्भीतो महादेवोऽजहादसून् ॥ ५८४ ॥

---

580 b) D B प्रभुम् (for नृपम्). —c) $S'_{1\cdot3-5}$ K C धूर्त- (emended as in text with $S'_{2\ 6}$ D B). —d) D B ⌊अ⌋भ्यगात् (for °धात्); $S'_6$ अभ्यधा (*sup. lin.* गा)त् .
—After 580 D B $S'_6$ marg. ins. :

83* (B 720) सहस्रवेधिता तेन रसेनैव न साधिता ।
विस्मयेन रसेनापि काञ्चनश्रियमृच्छता ।

581 b) D B $S'_6$ *sup. lin.* अनुरागगान् (for °रोधवान्). —d) D B $S'_6$ marg. ⌊इ⌋व निजं वसु (for द्रविणं बहु).

582 a) $S'_{1-6}$ K C B रस- (emended as in text with D); $S'_6$ C B -सिद्धि-. —c) D B $S'_6$ marg. अगान्नतु सतीदेश-.

583 c) $S'_{1-5\cdot6}$ (before corr.) K C हेमेव (emended as in text with D B).

584 a) $S'_{1\cdot4\cdot5\cdot6}$ (before corr.) K C प्रज्ञान- (emended as in text with D B); $S'_{2\cdot3}$ वि ($S'_3$ पि)ज्ञान-. —d) $S'_{1\cdot2\cdot6}$ K ⌊अ⌋जहद् (emended as in text with $S'_{3-5}$ C); D B $S'_6$ *sup. lin.* जहौ (for ⌊अ⌋जहाद्).
—After 584 D B $S'_6$ (on separate folio) ins. :

84* (B 725) धिक्तं वारिदमम्बु यो जलनिधेराप्याशुचिश्रीर्भवन्
मित्रं साशमुपद्रवत्यथ परिक्षीणः स्खलत्यद्रिषु ।
पद्मः स्तुत्यतमश्च यो विकसने सारै रसैरौरसैः
संप्रीय भ्रमरान् रसव्युदसने प्राणान्निजान्मुञ्चति ।

लद्दराजोऽगदङ्कारशङ्करो भट्टसूहकः ।
मन्त्रिणश्चान्तरङ्गाश्च सर्वदैवाभवन्प्रभोः ॥ ५८५ ॥

प्रत्यक्षा इव धर्मार्थकामाः काममनोरमाः ।
मेरदेव्यास्त्रयः पुत्रा राज्ञस्तस्योदपत्सत ॥ ५८६ ॥

---

(B 726) शेषं विषभयेनेव काठिन्येनेव पर्वतान् । [5]
मदेनेव द्विपांस्त्यक्त्वा सुखं भूस्तद्भुजेऽवसत् ।
(B 727) चित्रं च नालभट्टेन गुणिना मित्रबन्धुना ।
कुलपद्मेनापि राजवाह्लभ्यादुच्चनालता ।

[(l. 1) D अप्या° (emended as above with B). $-S'_6$ 84* and 85* on separate folio ending with the remark : २३ पृष्ठे पतितमेतज्जोनराजतरङ्गिण्याम् ].

585 [a]) D लद्ध–; B (evid. emend.) लब्ध–; $S'_6$ लद्द– (*sup. lin.* ब्द–). —After 585 D B $S'_6$ (on separate folio ) ins. :

85* (B 729) अभिषेणयतस्तस्य कन्यारत्नौषधार्पणात् ।
मद्रेन्द्रो बिह्लदेवोऽथ जातु यात्रामपीफलत् ।
(B 730) औचित्यात्साधुवादेषु प्रसक्तेन प्रभोः पुरः ।
सख्यं शङ्करवैद्येन निरवद्यं च बद्धवान् ।
(B 731) धृतामर्षः सूहभट्टः शङ्करप्रीतिवत्सरे । [5]
अपकारान्मद्रराजे चिन्तयन्नास्त सन्ततम् ।
(B 732) उदीचीनायको धाट्या यं पौरैः सह नीतवान् ।
शिखकुक्कुरराजस्य पुत्रं मलेकजस्रतम् ।
(B 733) मृतेऽथोदक्पतौ जातेऽत्युतिपिञ्जे मुक्ततां भजन् ।
स मद्रनायकद्वेषात्सूहभट्टार्थनाबलात् । [10]
(B 734) मद्रासन्नक्षितेः स्वाम्यं कश्मीरेन्द्रेण लम्भितः ।
सचेतनं जयस्तम्भमिव तं तत्र रोपयन् ।
व्यावर्ततारिलोकार्तिकर्ता स क्ष्माविकर्तनः ।

[(l 9) B मुक्तता (sic). —(l. 11) D लंबितः (emended as above with B)].

586 [c]) $S'_3$ मेरु–; D मेरा–; B (evid. emend.) मीरा–; D B राज– (for पुत्रा). —[d]) D B पुत्रास् ( for राज्ञस् ). $-S'_{1-6}$ K C transp. 586 and 587.

मेरखानः शाहिखानः खानो मह्मद इत्यपि ।
यैः संज्ञा अभ्यभूषन्त गङ्गौघैर्विग्रपा इव ॥ ५८७ ॥

कृत्रिमत्वान्निरस्तानां शोभादेव्यात्मजन्मनाम् ।
पुत्रं पिरुजनामानं न निरास्यत् परं नृपः ॥ ५८८ ॥

अलकासदृशीं राजा मानसप्रतिबिम्बिताम् ।
पुरीं पुण्यजनाकीर्णां प्रद्युम्नाद्रितटे व्यधात् ॥ ५८९ ॥

अयत्नप्राप्तवित्तानां यवनानां महीपतेः ।
वराटके च कोटौ च दृष्टिरासीत् समा तदा ॥ ५९० ॥

कश्मीरमण्डले म्लेच्छदुराचारेण दूषिते ।
महिमा ब्राह्मणैर्मन्त्रैर्देवैश्च स्वः समुज्झितः ॥ ५९१ ॥

प्रभावतेजो यैर्देवैः सततं प्रकटीकृतम् ।
खद्योतैरिव तैरेव देशदोषाद् विनिह्नुतम् ॥ ५९२ ॥

---

587 a) B (evid. emend.) मीर-. —c) $S'_2$ सत्या (or °भ्या) (for संज्ञा).

588 d) $S'_5$ (after corr.) निरास्थत्; $S'_{2-6}$ K C पुरात् (for परं).
—For 588 D B $S'_6$ marg. subst. :
86* (B 737) प्रमीतमातृकं शोभानन्दनं पिरुजाभिधम् ।
स राजा मेरखानादिनिर्विशेषमवीवृधत् ।
—After 589 D B $S'_6$ marg. ins. :
87* (B 739) पूर्णानन्दा जयारिक्ता भद्रा विस्मयदायिनी ।
श्रीस्तस्यातिथिसम्पत्त्यै भूभुजोऽभूद्दिवानिशम् ।
(B 740) राजावनाश्रयत्वेन प्रसिद्धः स सदायतिः ।
लक्ष्मीमचुम्बितामन्यैर्वताचुम्बद् द्विषां बलात् ।
(B 741) यवना नित्यतद्दत्तवित्तसम्पत्तिशालिनः । [5]
आहारव्यवहारादौ जितवन्तो महीपतिम् ।

591 b) $S'_{1\cdot3-5}$ K °चारेति (prob. mislec. for S'ār. ण); $S'_{2\cdot6}$ °चाराति ($S'_6$ *sup. lin.* °रणे); C (gram. assim.) °चारेऽति°. —cd) D B (by transp.) देवैर्मन्त्रैश्.
—For 592 D B $S'_6$ marg. subst. :
88* (B 474) खद्योतैरिव यैः कालबलात्तेजः प्रकाशितम् ।
तैर्देवैः कालदौरात्म्यात्तदन्तर्धिमनीयत ।

प्रत्याहृते ततस्तेजोविशेषे त्रिदशैरभूत् ।
प्रतिमानां शिलाभावो मन्त्राणां वर्णमात्रता ॥ ५९३ ॥

पुण्यक्षयेन कर्तॄणां कलिदोषेण चोज्झिताः ।
गीर्वाणैः प्रतिमाः सर्वा निर्मोका भुजगैरिव ॥ ५९४ ॥

रक्ते रागं शुचौ शौक्ल्यं मलिने मलिनां स्थितिम् ।
सङ्क्रान्ते सति गाहन्ते स्फटिकानीव भूभुजः ॥ ५९५ ॥

स्वयं ब्राह्मक्रियाद्वेषी म्लेच्छैश्च प्रतिबोधितः ।
सूहभट्टः प्रभुं जातु देवभङ्गार्थमैरयत् ॥ ५९६ ॥

---

593 D B transp. 593 and 594.
—After 593 D B $S'_6$ marg. ins. :

89* (B 747) कलिस्पर्शभयात्त्यक्तुकामैः स्वप्रतिमा ध्रुवम् ।
तद्ध्वंसे त्रिदशैर्म्लेच्छा धियमाविश्य चोदिताः ।
(B 748) राजान्तरज्ञो यवनमतभक्तः प्रतारितः ।
यवनैः सूहभट्टोऽथ प्रतिमानां निराकृतौ ।

[(l. 1) B $S'_6$ त्यक्त- (sic). —(l 3) D B $S'_6$ राजात्त- (mislec for S'ār. न्त)रज्ञो].

595 a) D शो(sic)क्ल्यं. —c) D संति.

596 b) $S'_2$ om. -बोधितः; D B $S'_6$ marg. यवनैश्च प्रतारितः.
—After 596 D B $S'_6$ (on Separate folio) ins. :

90* (B 751) पाषाणान् देवसान्निध्यभ्रमेणैष जनो नमन् ।
त्वत्प्रणामविशुद्धं स्वशिरो दूषयति ध्रुवम् ।
(B 752) मायया कवलक्षोभसंसर्गान्धंभविष्णुषु ।
श्रद्दधीत च देवत्वमीश्वरादितरेषु कः ।
(B 753) मुखानि कमलानीव रज्जवो भुजगा इव । [5]
शुक्तयो रजतानीव स्थाणवः पुरुषा इव ।
(B 754) मायेन्द्रजालसन्दर्भप्रभवादिनयोदिताः ।
ये च केचिज्जडैर्देवा भ्रान्तिशक्त्या प्रकल्पिताः ।

विहाय राज्यकार्याणि प्रजाभाग्यविपर्ययात् ।
देवानां प्रतिमाभङ्गे राजारज्यदहर्निशम् ॥ ५९७ ॥

पापिनां पापमूलोऽभूद् भूभृतामनयद्रुमः ।
हर्षदेवतुरुष्कोऽभूद् यस्य प्रागङ्कुरायितः ॥ ५९८ ॥

पत्रायितो लवन्यानामुत्पिञ्जो दारुणोऽभवत् ।
दुलचो म्लेच्छराजोऽभूद् यस्य पुष्पायितः सदा ॥ ५९९ ॥

---

(B 755) सन्निधापयितुं तान्कः प्रतिमासु क्षमो भवेत् ।
ग्रहीतुं मारुतं मुष्टौ सौष्ठवं कस्य दृश्यते । [10]

(B 756) ते च सन्निहिताः किं वा कुर्युः कर्म नियन्त्रिताः ।
शिल्पिभिः कल्प्यमानासु स्वतुल्यावयवास्वपि ।

(B 757) कलिकाले स्फुरत्यद्य तिष्ठेरंस्ते जना हि किम् ।
तेजस्तिमिरयोर्नास्ति साधारणपदस्थितिः ।

(B 758) तेनेत्यादिकुतर्कोक्त्या दुरमात्येन पापिना । [15]
निरस्तो देवताभावः प्रतिमाभ्यो महीपतेः ।

(B 759) सुरासुराणां समरे सज्जानां सततं तदा ।
असुरैर्विजितं नूनमन्यथा कथमप्ययुः ।

(B 760) विध्वस्ताः प्रतिमाः सर्वा गीर्वाणानां शिला इव ।
न विघ्नो भञ्जकानां च प्राग्वद्दृष्टः कदाचन । [20]

[(l. 3) D माया (emended as above with B). —(l. 4) D B श्रद्धीते (emended as above with M). —(l. 18) M (evid. emend.) [अ]मूः; (for [अ] युः). —(l. 20) B (evid. emend.) कथञ्चन (for कदाचन). —In S′$_6$ the following are on two separate folios : 90*, 597, 91*, 602, 603, 92*, 604, 93*, 608-10, 94*, 611, 612, 95*, 613, 614, 96*, 615, 97*, 98*, 618, *99, 619, 620, 108*, 621, 622, 101*].

597 a) S′$_{1-5}$ K C राज (S′$_2$ °जा) (emended as in text with D B). —b) S′$_2$ विपर्य……त् (blank with dots).

598 S′$_{1\cdot4\cdot5}$ K om. 598$^{ab}$ (supplied *sec. m.* marg. in S′$_5$). विपर्य……त् —598 —600 om. hapl. in D B.

599 c) S′$_5$ (orig.) K दुलोच-; S′$_5$ *sec. m.* डलचो; S′$_2$ डलदो (mislec. for S′ār. दुलचो); S′$_6$ C ड़लचो. —d) S′$_3$ तथा (for सदा). —In

देवेन्द्रमूर्तिभङ्गेच्छा यस्यासीत् तस्य भूभुजः ।
म्लेच्छप्रेरणया नित्यं विप्लवः स फलायितः ॥ ६०० ॥

मार्ताण्डविजयेशानचक्रभृत्त्रिपुरेश्वराः ।
भग्ना येनास्य को विघ्नः शेषभङ्गेन कथ्यते ॥ ६०१ ॥

सुरेश्वरीवराहादिप्रतिमाभङ्गकर्मणि ।
अकम्पत भियेवोर्वी नास्य सर्वङ्कषा तु धीः ॥ ६०२ ॥

---

S′$_6$ 599—602$^{ab}$ enclosed in brackets.

600 a) S′$_{2\cdot3\cdot6}$ C देवानां (for देवेन्द्र-); S′$_{1\cdot4\cdot5}$ (before corr) K -भङ्गस्य (mislec. for S′ār. च्छा).

601 a) S′$_{3\cdot6}$ C मार्तण्ड-; S′$_{1\cdot4-6}$ K C विषये° (emended as in text with S′$_{2\cdot3}$). —c) S′$_2$ °यते (for येन). —601 om. in D B. —For 601 D B S′$_6$ (on separate folio) subst. :

91* (B 762) भग्नः श्रीविजयेशोऽपि तेनेति कथयोत्थितम् ।
प्रक्रान्तस्यानुरोधेन शोकशल्यं सहामहे ।
(B 763) शृण्वतां पश्यतां श्रोत्रनेत्रस्य त्रस्यतो मुहुः ।
नोल्कानिपतनाच्चक्रधरभङ्गो व्यभिद्यत ।
(B 764) सिंहिकापुत्रदण्डात्तो मार्ताण्डः पुनरुत्थितः । [5]
न पुनः सूहदण्डात्तः पुनः कुत्रापि जात्वपि ।
(B 765) रीतिमय्या बृहद्बुद्धमूर्त्या मर्दितया नृपम् ।
निजनामाङ्कितां मुद्रां तां सूहो निरमापयत् ।
(B 766) प्रत्यङ्मुखः प्राङ्मुखत्वं योऽगान्नगररक्षया ।
मूर्तिमर्दाद् भूद्भीमस्वामी सोऽन्तर्मुखस्तदा । [10]
(B 767) सुमनोनागसंहर्तुर्निकर्तुः पक्षशालिनाम् ।
अभूच्छ्रीशारिका देवी पुरस्तस्यातिसंभ्रमा ।

[(l. 5) D B -दण्डान्तो (mislec. for S′ār. त्तो); B (evid. emend.) मार्तण्डः. —(l. 6) D B दण्डान्तः (sic)].

602 b) D B ध्वंसनोद्यमे (for -भङ्गकर्मणि). —c) S′$_5$ K अकम्पित (sic).

न पुरं पत्तनं नापि न ग्रामो नच तद्वनम् ।
यत्र सूहतुरुष्केण सुरागारमशोष्यत ॥ ६०३ ॥
कथाशेषीकृते सर्वगीर्वाणप्रतिमागणे ।
व्याधिमुक्त इवाऽऽनन्दं सूहभट्टोऽभजत्ततः ॥ ६०४ ॥
अपथ्याशीव बालः स सामन्तसहितस्ततः ।
जनानां जातिविध्वंसे सूहभट्टः कृतोद्यमः ॥ ६०५ ॥
जातिध्वंसे मरिष्यामो द्विजेष्विति वदत्स्वथ ।
जातिरक्षानिमित्तं स तान्दुर्दण्डमजिग्रहत् ॥ ६०६ ॥
प्रसादप्राप्तिलोभेन भूपतेरुपजीविषु ।
ब्राह्मणत्वाधिकां जातिं त्यजत्स्वप्यविलम्बितम् ॥ ६०७ ॥

---

603 a) D B नगरं ( for न पुरं ); D B वापि. —c) $S'_1$ ( orig. ) यस्य (*pr. m.* यत्र).
—After 603 D B $S'_6$ (on separate folio) ins. :
92* (B 770) तद्दर्शनभयेनेव तिरोभूतः स्वयंभवः ।
तदा हुताशो नाशोचि निकटस्थैर्द्रुमैः परम् ।
(B 771) भीत्येवापः प्रकाश्य स्वालिसन्ध्यं तत्र मज्जतः ।
सन्ध्यादेवी परं वन्ध्या तस्यागादनुकम्प्यताम् ।

604 d) $S'_5$ (before corr.) K [अ]भयात् (sic) (for [अ]भजत् ).
—After 604 D B $S'_6$ (on separate folio) ins. :
93* (B 773) सिन्धूद्भाण्डपुरयोः स्वामिनौ श्रीसिकन्दरः ।
श्रीशोभाकन्ययोः पाणिग्रहेणान्वग्रहीदथ ।
(B 774) प्रत्यमुञ्चत्स्वदेशोत्कं मेरसैद्रमहम्मदम् ।
राजा सहचरीकृत्य शोभापुत्रं स पित्र्यजम् ।
(B 775) दर्शितैर्मौसुलैः शास्त्रैर्जातिद्वेषमयैरिव । [5]
अश्रावि तेन तद्राज्ञा किमसाध्यं दुरात्मना ।
[(l. 3) B (evid. emend.) मीर–].

605 ab) $S'_{1\cdot4\cdot5}$ K स···हित° (blank filled as in text with $S'_{2\cdot3\cdot6}$ C. Thus *sec. m.* in $S'_5$). —d) $S'_5$ (before corr.) K सूर्य (mislec. for S'ār. ह). —D B om. 605.

606 b) $S'_{2\cdot3}$ [अ]यथ् (for [अ]थ). —D B om. 606.

607 c) M (evid. emend.) °त्वादिकां. —d) $S'_2$ त्यजन्तौ (for °त्सु); $S'_2$ marg. 'त्स्वस्य (mislec. for S'ār. प्य) वि°; K °त्स्वपि वि°. —D B om. 607.

श्रीसिंहभट्टकस्तूटवणिजौ श्लाघ्यतां गतौ ।
श्रीनिर्मलाचार्यवर्यस्त्रिजगच्छ्लाघ्यतां गतः ॥ ६०८ ॥

त्यक्त्वा जातिग्रहं यत्तावन्यदर्शनसेविनौ ।
शुष्कं तुरुष्कदण्डं च विन्यवारयतां यतः ॥ ६०९ ॥

निर्मलाचार्यवर्यः स सर्वस्वं तृणवत्क्षणात् ।
त्यजन् राजप्रसादेन न जातिं स्वामदूषयत् ॥ ६१० ॥

स्वामी भृत्यापराधेन दण्डनीय इति स्थितेः ।
सूहभट्टापराधेन कालो भूपेऽकरोत् क्रुधम् ॥ ६११ ॥

---

608 a) S′1.5 (before corr.) -कस्तूटा- (S′5 after corr. °टो); S′4 K -कस्तूट- (as in text); S′2.3 -कस्तूटौ; C S′6 -कस्थूटौ. D B -कस्तूट्ट-.

609 c) S′2 शुष्के (mislec. for S′ar. ष्कं); D B M देवानां प्रतिमाभङ्गो (M evid. emend. °ङ्गं). —d) S′2 विनिवा°; S′2 ततः; M (evid. emend.) किल (for यतः).

610 cd) D B त्यजन्वै पततु ब्रह्मदण्डो विप्रेण भाषिते ।
—After 610 D B S′6 (on separate folio) ins. :
94* (B 778) पश्यतां सर्वलोकानां ब्रह्मदण्डोऽपतद्दिवः ।
(B 779) कृतव्रणः स तेनाङ्गे विसर्पिच्छिन्नविग्रहः ।
कीर्यमाणक्रिमिकुलक्रकचैश्चारितैरभूत् ।
(B 780) अनुभाव्य व्यथां भाविनिरयक्लेशवर्णिकाम् ।
गणरात्रेण तं प्राणाः काङ्क्षितापगमा जहुः । [5]
ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः ।
(B 781) दण्डाक्रान्तः स राजाथ मेरखानं निजे पदे ।
अभिषिच्यालिशाहाख्यां कृत्वास्यागाद्यमालयम् ।
[For ll. 2-6 cf. Kal IV. 654—56ab. – (l. 2) Kal. विमर्द- (mislec. for v. l. विसर्प-) (for विसर्पि-). —(l. 3) Kal. (erroneously) -कुलः (for -कुल-). —(l. 4) S′6 अनुभावि (sic). —(l. 5) B (evid. emend.) °गमात् (for °गमा. Thus in Kal.). B om. l.6. —(l. 7) B (evid. emend.) मीर-].

611 c) K सूर्य (mislec. for S′ar. ह).

ज्यायांसमभिषिच्याथ पुत्रं सेगन्धरो नृपः।
नन्दाष्टाब्दे ततो ज्येष्ठकृष्णाष्टम्यां व्यपद्यत ॥ ६१२ ॥

आलिशाहः स वसुधासुधांशुर्जगतस्तमः।
प्रदोषारब्धमच्छैत्सीद् भास्वतोऽस्ते पितुस्ततः ॥ ६१३ ॥

अदर्पकच्चितं बालं प्रौढा लक्ष्मीर्मुहुर्मुहुः।
कुलजालिङ्गदङ्गैस्तं राजानं नतिशालिभिः ॥ ६१४ ॥

---

612 b) C शे (Bengali speech-habit) क°; D सेकंधरो; B (evid. emend.) सिकन्दरो. — c) $S'_{3.5}$ (after corr) $_6$ C ज्यैष्ठ-. — d) $S'_2$ after व्यपद्यत (figure) 2 (unexplained).

—After 612 D B $S'_6$ (on separate folio) ins. :

95* (B 784) रूपं निष्फलमार्चितं किमपि तन्मन्दानमन्दाग्रहान्।
भक्तान्यः समनुग्रहीतुमतुलस्वाच्छन्द्यवन्यक्रियः।
गौरीरूपकरीं वपुःसहचरीं स्वां शक्तिमव्यक्तयद्।
भुक्तिं मुक्तिपुरःसरीं दिशतु वो देवः स्वयम्भूरयम्।

(B 785) विश्राम्यतुतरां शाहिखानवृत्तान्तसानुनि। [5]
मद्वाक्श्रान्तान्यराजाख्याशैलकोटिशिखाटनैः।

(B 786) तद्गुणौघरसश्लाघ्यां पिबन्त्वपि गिरं मम।
सुगन्धिघनसारेण कूपाम्भोऽपि मनोरमम्।

[(l. 3) M (evid. emend.) -धरीं (for -करीं). —(l. 4) B (evid. emend.) मुक्त- (for मुक्ति-). —(l. 5) D B विश्रम्यतु° (emended as above with M); B -वृत्ताज्ञ (mislec. for Dev. न्त) सानुतिः (sic)].

613 b) D B जगतां. —c) $S'_2$ °रम्भम् (for °रब्धम्); D B आच्छि (B च्छे) त्सीद्; $S'_{1.4.5}$ K द् om. in अच्छैत्सीद्.

614 c) $S'_6$ अङ्गैः (marg. ण्डे) स्तं.

—After 614 D B $S'_6$ (on separate folio) ins. :

96* (B 789) तस्य बाल्यं मनोहारि विशेषाद्राज्यराजितम्।
कान्तिं कलयते कान्तः पूर्णेन्दुः शरदि स्फुरन्।

[(l. 2) D B कान्त- emended as above with M].

पूर्वोर्वरेशवद्बालमपि तं भूभुजोऽनमन् ।
अहिदष्टो हि दामापि क्रमितुं न प्रगल्भते ॥ ६१५ ॥

निजबुद्धिबलाद् दैवहितत्वेनोपसंहितात् ।
सूहभट्टेन मुख्यत्वं सचिवानामवाप्यत ॥ ६१६ ॥

विश्वासन्यस्तशस्त्रं स लद्दमार्गपतिं बलात् ।
बद्धवान् सह तत्पुत्रैर्वर्जयित्वा महम्मदम् ॥ ६१७ ॥

---

615 a) D B पूर्वोर्वीश्वर- (for °र्वरेश-). —b) $S'_1$ (before *pr. m.* corr.) भूभुजं; $S'_1$ (after *pr m.* corr.) °नमन् . —ab) $S'_5$ K om. 615ab; in $S'_5$ *sec. m.* marg. as in text with °भजन् (for °नमन्). —d) $S'_5$ (before corr.) B (evid. emend.) प्रगल्भ्यते.

616 c) $S'_2$ सह-; K सूर्य (mislec. for S'ār. ह-).

—For 616 D B $S'_6$ (on separate folio) subst. :

97* ··· नाधिकारिमुख्यत्वं तदा सूहे ··· ··· ।
··· ··· मतिवैदग्ध्यं तदीयमवहद्द्विधः ।

617 b) $S'_5$ K लद्दं; $S'_{1.4.5}$ K -पतिवे (mislec. for S'ār. म्व)लात्.
—For 617 D B $S'_6$ (on separate folio) subst. :

98* (B 792) सूहेनाशङ्कि मार्गेशो लब्धकः स्वोदयासहः ।
ध्रुवं स्वाशयवद्भाति सर्वस्यैव पराशयः ।
(B 793) अद्रोहार्थिततत्संवित्पीतकोशोदकोऽपि सन् ।
लद्दमार्गपतिं सूहभट्टो रोद्धुमचिन्तयत् ।
(B 794) तेन ह्यशङ्कि स स्वस्मिन्स्वात्मेवास्मिन्ह्यविश्वसन् । [5]
महात्मनां भवेत्कोशः कोशो वारि तु पापिनाम् ।
(B 795) कातरो वीरविद्वेषी निर्गुणो गुणिमत्सरः ।
दूढः कुलीनः कौलीनो विधात्रैव हि निर्मितः ।
(B 796) वीरः स लब्धमार्गेशो जातकोशोदकाग्रहः ।
दाम्भिके सूहभट्टे तु बके तिमिरिवाश्वसीत् । [10]
(B 797) शस्त्रं मार्गपतिर्वीरः करालम्बमपि स्वयम् ।
यत्स्वाङ्गसङ्गमत्याक्षीत्सूहप्रत्ययलब्धये ।
हरेर्हस्तप्रणामं तच्छस्त्रत्यागममंस्त सः ।

---

(B 798) कलिकालभुजङ्गस्य तादृशमायुधाबिलम् ।
ग्रहं शुचिरुचो मत्वा पितुः सुहृद्विधुंतुदम् । [15]
शूरो मह्लादमार्गेशो बाङ्किले शङ्कितोऽवसत् ।
(B 799) मार्गेशं शौर्यकोशाभ्यां शस्त्रोपेक्षकमप्यतः ।
रोद्धुं नैवाशकत्सुहृः सहसा साहसासहः ।
(B 800) तावोतुरिव गर्ताटौ मन्त्री रोद्धुमनाः समम् ।
तयोः सहपुरावासबिलवेशस्पृहामगात् । [20]
(B 801) राजाग्रे ताजकादीनां विश्वासार्थमनर्थसूः ।
लद्दमार्गेशपुत्राणां शूराणां शं स दत्तवान् ।
(B 802) व्याहरन्मधुरं स्निग्धमपश्यद्याव्रृणोद् गुणान् ।
मित्रैरिव स तैः सत्रा छन्नद्रोहं व्यवाहरत् ।
(B 803) अन्तः कण्टकपारुष्यं संवृत्योन्नतपक्षभृत् । [25]
प्रकृतिस्निग्धतां मन्त्री तिमिवत्समदर्शयत् ।
(B 804) हृदयं कालकूटेन विषैरङ्गान्यभङ्गुरैः ।
कृत्वास्य किं व्यधाद्वेधा रसनाग्रं सुधाकणैः ।
(B 805) स तान्कपटविश्वासभोज्यैराश्वास्य दुष्कृती ।
विश्वासवागुरावेशमैच्छन्मह्लादपक्षिणः । [30]
(B 806) त्रिजगत्सर्गसंहारकरणोद्धुरभैरवः ।
विधिः सहायतां धत्ते भियेवोग्रात्मनां विधौ ।
(B 807) राधेयस्यन्दनस्येव भूमिर्भूयो भये तदा ।
छिद्रकाले रुजत्पादं तीव्रा मार्गयते रुजा ।
(B 808) कालज्ञो दीर्घसूत्रोऽथ सूहो विमलकाभिधम् । [35]
स्वभृत्यमिति सन्दिश्य व्यसृजन्मह्लादं प्रति ।
(B 809) बालो राजा नवं राज्यं मन्त्री मार्गपतिर्जरन् ।
धुर्यो यदि भवान् दूरे तर्हि का जगतो गतिः ।
(B 810) अपेक्षन्ते प्रकृतयस्त्वामात्मानमिवाखिलाः ।
पाषाणा ह्यर्कपाषाणाः सूर्योदयदशां विना । [40]
(B 811) अवहेलामयं राजधुरः संवहनं तव ।
वर्धतां दुर्धियां चान्तरातङ्कविषवल्लरी ।
(B 812) अस्मच्चक्षुश्चकोरोऽपि चिरतृष्णाकदर्थितः ।
अमन्दमानन्दनीयः कलैकनिधिना त्वया ।

महम्मदो मार्गपतेर्वन्धं श्रुत्वैव शौर्यवान्।
भाङ्गिलाचलमार्गेण मार्गाभिज्ञः पलायत ॥ ६१८ ॥

---

(B 813) निवेद्य कुशलप्रश्नं मार्गराजस्य सादरम्। [45]
विमलो मह्मदस्याथ सन्देशं निरवर्णयत्।
(B 814) स्वद्रोहनिश्चयं जानन्मह्मदः श्रुततद्वचाः।
स्वं विना स्वपितुर्वन्धं स मत्वा कोशयन्त्रितः।
द्वित्रांस्त्वादिश्य तान्वीरान्कश्मीरेभ्योऽचलत्स्फुटम्।

[(l. 1) D सो (emended as above with B) दयः (<°यस् mislec. for S'ār. या)सहः. —(l. 3) B °को⁻सन्. —(l. 4) B (evid. emend.) लब्ध- ( for °द्द ). —(l. 5) M om. second हि —(l. 8) D (after corr.) दूयः ; B दूढः (as above); D कुलीन- (emended as above with B). —(l. 10) D दांविके (emended as above with B). —(l. 11) B anusvāra om. in शस्त्रं. —(l. 13) M (evid. emend.) हस्ति- (for °स्त-). —(l. 14) B °शु⁻बिलम्; $S'_6$ °युषोबिलम् ( sic ). —(l. 17) D B °पेक्षणम् (emended as above with M). —(l. 23) B anusvāra om. in मधुरं. —(l. 24) D B कं न (<कन्न mislec. for S'ār. छन्न-); M (evid. emend.) स्नेहं (for द्रोहं). —(l. 25) M (evid. emend.) °वान् (for °भृत्). —(l. 29) D भोज्यैवा° (mislec. for S'ār. रा). —(l. 31) D B -करणोद्धार- (emended as above). —(l. 32) D B विधेः (emended to विधौ with M). —(l. 33) B (evid. emend.) भिये (for भये). —(l. 34) D रुदत्° (emended as above with B). —(l. 42) D B दुर्धियं (emended as above with M). —(l. 44) B visarga om. in °नीयः. —(l. 46) D विमह्नो (sic). —(l.47) D B °वचः (emended as above with M)].

618 a) $S'_2$ (evid. emend.) मुह°. —b) $S'_2$ D वन्धुं. —d) $S'_{2-6}$ C पलायितः.

—After 618 D B $S'_6$ (on separate folio) ins. :

99* (B 816) मारुतस्येव वीरस्य गतिः क्वापि न हन्यते।
श्रुत्वा तद्गमनं दूतान्मन्त्रनिर्भेदशङ्कितः।
लद्दमार्गपतिं रोद्धुं सहसा समचिन्तयत्।
(B 817) रुजः संवीक्षणव्याजान्मार्गेशस्याशयाप्तये।
विश्वासनाय च प्रास्यद्भट्टोत्सं तस्य सद्मनि। [5]
(B 818) चिकित्सकौषधाहारी मार्गेशतिमिनाऽऽहृतः।
नावोधि पिण्डीनिर्गूढबडिशं पुनरुत्सवः।

निरुध्यमानं निःशङ्कमगदङ्कारशङ्करम् ।
अप्रयुक्तातितीक्ष्णापि शस्त्री धीश्च व्यडम्बयत् ॥ ६१९ ॥

अपश्यन् दर्पतः किञ्चित् सिंहो विशतु वागुराम् ।
चित्रं तु तद्विशेत्पाशं दूरदृश्वाऽपि यत् खगः ॥ ६२० ॥

एकाहेनैव तत्कृत्वा मह्रद्प्राप्तिचिन्तया ।
कन्ययेव दरिद्रः स नक्तंदिवमदूयत ॥ ६२१ ॥

---

(B 819) तावन्मार्गपतेः सौधं सिंहनादोद्भटैर्भटैः ।
जवाद्रोधितवान्मन्त्री दाशो नीडं तृणैरिव ।

(B 820) तीक्ष्णैरपि दयाविष्टैरिष्टैरिव स विह्वलैः । [10]
कथञ्चिद् दोषरहितो मार्गेशः समरुध्यत ।

[(l. 3) B (evid. emend.) लब्ध- (for लद्द-). —(l. 4) D B °शस्य श° (emended as above). —(l. 5) D B प्रासद् (emended as above). —(l. 10) D B अप्यदया° (emended as above with M)].

619 b) $S'_1$ द om. in अगदङ्कार-. —d) $S'_{3.5}$ (marg. *sec. m.*) C शस्त्रि-.

620 a) $S'_{2.3.5.6}$ K C अपश्यद्द° (mislec. for S'ār. न्द); $S'_{2.5}$ (marg. *sec. m.*) $_6$ C (gram. assim.) कश्चित् (for किञ्चित्). —b) D B $S'_6$ (after corr.) विशति. —c) $S'_{3.5}$ marg. पादं (mislec for S'ār. शं). —d) $S'_{2.3}$ $RSs_2$ -दृश्चा ($S'_3$ marg. *pr. m.* श्वा)पि; $S'_{1-5.6}$ (before corr.) K C यः ख (<यᳵख jihvamūliya mislec. for S'ār. त्खगः).

—After 620 D B $S'_6$ (on separate folio) ins. :

100*(B 823) ततो मार्गपतेः पुत्रान्मेषानिव स सौनिकः ।
रुद्धवानुद्धतक्रोधः पाप्मा मूर्त इवापरः ।

(B 824) ताभ्यां सपरिवाराभ्यां कारागारमपूपुरत् ।
न परं भुवनं सर्वं दुर्यशोभिश्च निश्चलैः ।

[(l. 2) $S'_6$ -कोपः (for -क्रोधः)].

621 a) $S'_{1-6}$ K C तच्छु (mislec. for S'ār. त्कृ)त्वा. —b) $S'_1$ (before corr) $_{2-5}$ K C मह्रदः. —d) $S'_{4.5}$ K D °दिनम् (for °दिवम्).

दुर्दण्डदेशे गोविन्दनाम्नो मित्रस्य वेश्मनि ।
विश्वस्तः प्राविशत् तावद्विश्रमार्थं महम्मदः ॥ ६२२ ॥

वह्नेर्धूमविवर्धितः शमयति ज्वालाभरं वारिदो
वृक्षक्षोदभवो वनानि नयति क्षिप्रं कृशानुः क्षयम् ।
दाहं जन्मभुवो दिशेद् विषतरुर्वैरस्यदोषावहं
द्रुह्यन्त्यत्युपकारिणेऽपि नितरां लोभाभिभूता जनाः ॥ ६२३ ॥

प्राप्ते महम्मदे मार्गपतौ विश्वासतो गृहान् ।
स गोविन्दखशश्चित्ते क्षणमेवमचिन्तयत् ॥ ६२४ ॥

मन्त्रिणा सूहभट्टेन राज्योपद्रवरक्षिणा ।
द्वैराज्यकारी दुर्बुद्धिर्विन्यवारि महम्मदः ॥ ६२५ ॥

---

622 d) $S'_1$ विश्रा° (sic); $S'_2$ (evid. emend.) मुहम्मद–.
—After 622 D B $S'_6$ (on separate folio) ins. :
101* (B 827) श्रीसेकन्दरदत्तैतद्देशाधीकारशालिना ।
मह्मदस्य पुरा शाखी तेनानाटि हि दुर्धिया ।
[(l. 1) B (evid. emend.) °सिकं°; °धिकार–].
623 a) $S'_{4\cdot5}$ (before corr.) ज्वारा–. —b) $S'_2$ -भुवो (for -भवो); D कृशाणुः; $S'_6$ स्वयम् (for क्षयम्. Thus marg.) —d) $S'_4$ (after corr.) $_5$ K D द्रुह्यत्त्यु°; $S'_5$ (marg. *sec. m.*) $_6$ C °कारिणो; D B $S'_6$ (marg.) सततं (for नितरां); $S'_{1\cdot4\cdot5}$ K D °भूतो जनः.
624 a) $S'_2$ (evid. emend.) मुह°. —b) $S'_3$ गृहम् (mislec. for S'ār. °हान्).
625 c) D B $S'_6$ (after corr.) काङ्क्षी; $S'_1$ र् om. in °बुद्धिर्. —d) $S'_5$ (marg. *sec. m.*) C B °रित्य (mislec. for S'ār. विन्य); $S'_2$ (evid. emend.) मुह°.
—After 625 D B $S'_6$ marg. ins. :
102* (B 831) लीलेवापक्रिया कर्तुरपकार्यस्य सा पुनः ।
नाडीव व्रणिता जातु न शुष्यति कथञ्चन ।
(B 832) परिणामेऽतिदुःखेन सुखेनासुखसीमनि ।
अपथ्येनेव किं न स्यात्सेवितेनामुना फलम् ।
[(l. 4) B (evid. emend) नः (for न)].

राजद्रोहोद्यतः पापी निःसामर्थ्यो भयादयम् ।
मम देशं प्रविष्टोऽद्य रक्षणीयो न युज्यते ॥ ६२६ ॥

तावच्छ्रीसूहभट्टेन विसृष्टाः श्रेष्ठबुद्धयः ।
अन्वेषका गृहं प्राप्ता गोविन्दस्य खशेशितुः ॥ ६२७ ॥

मैत्रीमुल्लङ्घ्य निर्व्यूढामाश्रितस्य च रक्षणम् ।
महम्मदं निजं मित्रमर्पयामास दुर्मतिः ॥ ६२८ ॥

सुप्तं हरिमिव व्याधो यदा बद्ध्वार्पिपत् खशः ।
पशुवत्तं तदा तेऽथ कश्मीरानानयन् द्रुतम् ॥ ६२९ ॥

मन्त्रार्दितस्य फणिनः प्लवगाश्चपेटै-
र्व्याधाः सटाविघटनान्निरसोर्हरेश्च ।
बद्धस्य कातरतया बलिनोऽवमानै-
र्निन्दां विना किमिव नाम परं लभन्ते ॥ ६३० ॥

---

626 [a]) S′$_{2\cdot3\cdot6}$ C राज्य–.
—After 626 D B S′$_6$ marg. ins. :
103* (B 834) इति सम्मन्त्र्य विश्वस्ताजिह्मगो मह्मदं ततः ।
सुप्तं हरिमिव व्याधो गोविन्दस्तं निबद्धवान् ।
(B 835) अनेकेनाथ रत्नेन निःसपत्नत्वलिप्सया ।
एकं सूहः स पुंरत्नमक्रीणान्मह्मदं ततः ।
[(1 2) D निबंध (<बन्ध mislec. for S′ār. द्ध)वान् . —(l. 4) D B अक्रीणत् (emended as above)].

627 [b]) S′$_6$ श्रे (*sup. lin.* ज्ये)ष्ट–.

628 [ab]) S′$_{1\cdot4\cdot5}$ K om. 628[ab], in S′$_5$ supplied later marg. *sec. m.* —[c]) S′$_2$ (evid. emend.) मुह°. —D B om. 628.

629 [b]) S′$_{1-5\cdot6}$ (before corr.) K C [अ]क्षि (mislec. for S′ār. र्पि)पत्. —[d]) S′$_1$ ( after corr. ) $_{4\cdot5}$ K अनयन् ( emended as in text with S′$_{2\cdot3\cdot6}$ C D B); S′$_1$ (before corr.)$_4$ C D °नयद् (mislec for न् in S′ār. conj. न्द्रु).

630 [b]) S′$_2$ सदा (mislec. for S′ār. टा). —[c]) S′$_1$ या om. in °तया; S′$_{4\cdot5}$ K D °तरा (for °तया). —[d]) C anusvāra om. in निन्दां; D परे (mislec. for S′ār. रं).
—After 630 D B S′$_6$ marg. ins. :
104* (B 839) करोटीटङ्कनाघट्टरदटाङ्कारकुट्टनैः ।
पर्यभूयत जिह्मेन सूहभट्टेन मह्मदः ।

मान्यं कृतावमानं तं शङ्कमानः पलायनम् ।
वहुरूपे महादुर्गे सूहः कारामवीविशत् ॥ ६३१ ॥

विद्युद्द्योतभरैर्निशि प्रवसतः पान्थान्नवो वारिदः
पञ्चास्यो वनवासिनो मृगगणान् व्यावृत्य विप्रेक्षितैः ।
गम्यान् वक्रगतैर्दिनेशतनयो राशीनजादीन् विधि-
र्भद्राभासविलोकनैर्दुरितिनो विश्वास्य पर्यस्यति ॥६३२॥

शाहनाम्नयास्ततो दास्या मुखेन प्रतिबोधितः ।
महम्मदो निजधात्रेयैर्बन्धस्थानादकृष्यत ॥ ६३३ ॥

स हि स्वेदाकुलः स्नानं करोमीति स्वरक्षकान् ।
भ्रामयित्वा प्रविश्याथ स्नानकोष्ठं ततोऽचलत् ॥ ६३४ ॥

धात्रेयैर्विहितं सन्धिभेदस्थानमुपेत्य सः ।
हंसः क्रौञ्चान्तरमिव निःसृतोऽथ महम्मदः ॥ ६३५ ॥

रोषादिव स्मृतिं हन्तुं निष्पतन्निर्झराम्भसाम् ।
भृगोरिव ततो दुर्गाददाज्झम्पामकम्पितः ॥ ६३६ ॥

---

631 d) $S'_{2\cdot3}$ C visarga om. in सूहः; C कारम्.

—After 631 D B $S'_6$ marg. ins.:

105* (B 841) हितैषिणो निजप्राणैर्देवस्य स्वानुजीविनः ।
विषयेऽस्मिन्नधीकारस्तेनामन्दमधीयत ।

632 b) K मृग– (for वन–. Thus marg.); B (evid. emend.) °वृत्य. —c) $S'_{2\cdot3\cdot5\cdot6}$ (before corr.) K C गत्या; $S_4$ गत्यान् (for °म्यान्); D अजाधीन् (sic). —d) $S'_1$ (marg. *pr. m.*) gloss : ड (*inf. lin. pr. m.* दु)रितिनः पापिनः विश्वास्य विश्वासं कृत्वा पर्यस्यति नाशयति.

633 b) D B $S'_6$ marg. -विम्बितः (for -बोधितः).

634 a) C B खेदाकु°. —c) D B भ्रम°.

635 d) $S'_2$ (evid. emend.) मुह°.

636 a) $S'_{2\cdot3}$ C श्रुतिं; D B स्तुतिं (for स्मृ°); $S'_6$ श्रु(*sup. lin. pr. m.* स्तु) तिं; D B $S'_6$ (after corr.) हर्तुं. —b) D B $S'_6$ marg. उत्पतन्° (for निष्पतन्°). —d) B (evid. emend.) $S'_6$ marg. ददौ (for अदाज्); C जम्पाम्.

अशक्नुवन्नमुं रोद्धुं पाषाणा रक्षिणो न च ।
निर्झरास्तु तदङ्घ्रिस्थनिगडध्वनिडम्बरम् ॥ ६३७ ॥

धात्रेया मह्मदस्याथ भञ्जन्तो निगडान् दृढान् ।
सूहभट्टममन्यन्त भग्नं साकं स्वबन्धुभिः ॥ ६३८ ॥

महम्मदवदेवास्मिञ्शङ्कमानः पलायनम् ।
वृद्धं निपीतकोशोऽपि मार्गेशमवधीद् द्विजः ॥ ६३९ ॥

हते मार्गपतौ वृद्धे सूहभट्टेन दुर्धिया ।
अमन्दनिन्दमाक्रन्दत् पितरीवाखिलो जनः ॥ ६४० ॥

ऋक्षैः संलक्षयन्नाशाविशेषं निशि निश्यथ ।
पक्षीव नीडभ्रष्टः स सूहोलूकभयादयात् ॥ ६४१ ॥

अहस्तस्य विहस्तस्य रात्रिरासीन्निशा दिनम् ।
विपर्यैति ध्रुवं सर्वं विधौ विधुरतां गते ॥ ६४२ ॥

कारानावं समुल्लङ्घ्य चलितं तं स्मरन्मुहुः ।
महम्मदतिमिं सूहधीवरः शुचमासदत् ॥ ६४३ ॥

---

637 a) K वो (mislec. for S′ār. रा)द्धुं. —b) D B $S'_6$ (after corr.) पाषाण°. —c) $S'_1$ तत (by ditto.)द–.

638 a) $S'_2$ दात्रेया. —b) D भजंतो (sic). —c) $S'_5$ (before corr.) K सूर्य– (mislec. for S′ār. ह).
—After 638 D B $S'_6$ marg. ins. :
106* (B 849) हिमगमनतः क्लान्तस्वान्तो हिमं मनुतेऽनलं
तटतरुमुखं नावा गच्छन्व्रजत्परिपश्यति ।
वलति नितरां विश्वं विश्वं विवेत्ति च मूर्छितः
सरलहृदये . शङ्काग्रस्तस्तनोत्यतिशङ्किताम् ।

[(l. 2) B सु (mislec. for Dev. मु)खं].

639 a) $S'_2$ (evid. emend.) मुह°; D B $S'_6$ *sup. lin.* एतस्मिन् (for एवा°). —d) C मार्गे समबधीत्; D B $S'_6$ marg. स मार्गेशमघातयत्.

640 c) $S'_{1\cdot4\cdot5}$ K C अक्रन्दन् (emended as in text with $S'_{2\cdot3\cdot6}$ D B). —d) $S'_{1-6}$ K C [अ]खिला जनाः (emended as in text with D B).

641 b) $S'_2$ -नि (mislec. for S′ār. वि)शेषं. —d) $S'_{2-6}$ K C B लोक– (for °लूक–).

643 c) $S'_2$ मुह°.

मन्त्रिणा सूहभट्टेन पालितैर्लालितैर्जनैः ।
ज्ञातो दर्शनमात्रेण स्वर्यातः श्रीसिकन्धरः ॥ ६४४ ॥

श्रीसिकन्धरशाहिर्यं शोभादेव्याः स्वमात्मजम् ।
उत्पिञ्जानामभावार्थं स्वदेशान्निरवासयत् ॥ ६४५ ॥

उदीचीपतिना राजपुत्रत्वादभिनन्दितम् ।
कश्मीरानाययौ जेतुं तमादायाऽथ मल्लदः ॥ ६४६ ॥

तुरुष्ककटकैः सार्धं श्रुत्वा पिरुजमागतम् ।
व्यसृजत् तन्निरोधाय सूहः श्रीलद्दगौरकौ ॥ ६४७ ॥

मन्त्रैः श्रीलद्दराजस्य विक्रमैर्गौरकस्य च ।
सा तुरुष्कचमूः शान्ता व्याधिर्दानजपैरिव ॥ ६४८ ॥

वीतभीतिस्ततो मन्त्री कम्पनाधिपतिं व्यधात् ।
लद्दराजं गौरभट्टं क्रमराज्येश्वरं च सः ॥ ६४९ ॥

सन्ध्याक्षण इवोदग्रे सूहे रञ्जितभूभृति ।
नाभूतामुदितौ राजयुवराजौ रवीन्दुवत् ॥ ६५० ॥

श्येनो हन्ति पतत्रिणो मृगपतिर्निष्पातयिष्णुर्मृगान्
भिद्यन्ते मणयोऽपि वज्रमणिना खाता खनित्रैर्मही ।
पुष्पाणीव नभस्वता ग्रहगणाः सूर्येण निर्धूनिताः
प्रायेणात्र विलोक्यते परिभवत्रासः सजातीयतः ॥६५१॥

---

644 d) $S'_{2\cdot3}$ °सेकन्धरः; C °शि(Bengāli speech-habit) कन्धरः; D B $S'_6$ (after corr.) °सिकन्दरः.

645 a) $S'_{2\cdot3}$ °सेकन्धर–; $S'_6$ °सिकन्द (before corr. न्ध) र–; C °शि (Bengāli speech-habit)कन्धर–; D B ° से(B सि)कन्दर–; M (evid. emend.) -शाहो (for शाहिर्).

646 c) $S'_3$ C काश्मी°.

647 a) D B सार्कं (for सार्धं).

648 b) $S'_2$ विक्रमैशौर° (sic).

650 b) $S'_6$ (by metathesis) रञ्जति (for रञ्जित–).

651 b) $S'_3$ विद्यन्ते; —c) $S'_{1-5\cdot6}$ (before corr.) K C च भास्वता (emended as in text with D B).

द्विजातिपीडने तेन प्रेरितोऽपि मुहुर्मुहुः ।
श्रीसिकन्धरभूपालः करुणाकोमलाशयः ॥ ६५२ ॥

यवनाब्धिमहावेलां यामकार्षीत् कथञ्चन ।
उल्लङ्घिता द्विजातीनां तेन दण्डस्थितिस्ततः ॥ ६५३ ॥

दर्शनान्तरविद्वेषी प्रदोषस्तमसां निधिः ।
यागयात्रादि नागानां दुर्वृत्तः स न्यवारयत् ॥ ६५४ ॥

शङ्कमानः कृतातङ्कसङ्कोचानां द्विजन्मनाम् ।
विदेशगमनाज्ञातिरक्षामक्षाममत्सरः ॥ ६५५ ॥

मोक्षाक्षरं विना मार्गो दातव्यो नैव कस्यचित् ।
इत्यादिशदशेषान् स मार्गरक्षाधिकारिणः ॥ ६५६ ॥

ततो मीनानिव व्याधो दत्तबन्धे सरिज्जले ।
द्विजातीनतिदुर्जातो देशेऽस्मिन् न्यग्रहीत्तराम् ॥ ६५७ ॥

तद्भयानलजं तापं पापं च बहवो द्विजाः ।
अग्निज्वालाप्रवेशेन सहसैव न्यवारयन् ॥ ६५८ ॥

केचिद्विषेण पाशेन परे तोयेन चापरे ।
भृगुणा वह्निना चान्ये विप्रा भीत्या विपेदिरे ॥ ६५९ ॥

---

652 a) $S'_{2\cdot3\cdot6}$ C [अ] नेन (for तेन. Thus marg. in $S'_6$). —c) $S'_{2\cdot3}$ °सकन्धर–; C शि(Bengali speech-habit)कन्धर–; D B से (B सि) कन्दर–.

653 c) D B $S'_6$ marg. उदलङ्घि. —d) $S'_5$ after ततः (*int. lin. sec. m.*) युग्मं.

655 c) $S'_6$ (after corr.) विद्वेष– (for विदेश–). —d) $S'_6$ -सु(sic) न्द (mislec. for S'ār. त्स)रः.

657 c) D B $S'_6$ marg. लोकानप्य° (for द्विजातीन°).

658 a) $S'_1$ °नललं (mislec. for S'ār. जं); $S'_{2-6}$ K C °नलसन्तापं. —b) D B जनाः (for द्विजाः).

659 d) D B जना (for विप्रा).

राजद्रोहिसहस्रेण रक्षितुं राजवल्लभः ।
न त्वेकमशकद्विप्रमेतस्मिन् द्वेषदूषिते ॥ ६६० ॥

दुर्वहत्वेन निन्दन् स राज्यभारग्रहं खलः ।
अश्लाघत द्विजाक्रन्दश्रवणानन्दलाभतः ॥ ६६१ ॥

गृहाद्भूम्येव विप्राणां पङ्क्तिर्जात्यभिमानिनी ।
रुद्धद्वारात्ततो देशादपमार्गैरपासरत् ॥ ६६२ ॥

त्यक्त्वापि पितरं पुत्रस्तं पिता चागमद् द्विजः ।
सूहान्तके कृताक्षेपे विदेशं परलोकवत् ॥ ६६३ ॥

क्षमा रूक्षा क्षाममशनं व्यायामो वेदनामयः ।
जीवन्नरकता तेषां विदेशोऽगाद् द्विजन्मनाम् ॥ ६६४ ॥

धाटीफणीन्द्रभीतीव्रतापस्वल्पाशनातुरैः ।
मार्गेऽनेकैर्द्विजैर्मृत्युलाभात् सुखमलभ्यत ॥ ६६५ ॥

---

660 a) M -द्रोहीन् (sic). —b) $S'_3$ D -वल्लभाः. —c) $S'_{2-6}$ K C अशकन्वि° (mislec. for S'ār. द्वि); D B $S'_6$ marg. लोकम् (for विप्रम्). —d) D B $S'_6$ marg. -दीक्षिते (for दूषिते).

661 b) $S'_{3-5}$ K C -भाराद (mislec. for S'ār. रग्र)हं; $S'_{2\cdot6}$ -मलं (for -ग्रहं. Thus marg. in $S'_6$). —c) D B जना° (for द्विजा°).

662 a) $S'_3$ K C °ह्मू (mislec. for S'ār. द्धू) म्येव; B (evid. emend.) भूयैंव; $S'_5$ धू (marg. *sec.m.* भू) म्यव; $S'_6$ भूम्ये (after corr. यैं) व; D B $S'_6$ marg. लोकानां (for विप्राणां). —c) D B $S'_6$ marg. -मार्गात् ( for द्वारात् ); $S'_{2\cdot3}$ त् om. in द्वारात्. —d) C $S'_5$ marg. °सरत (sic).

663 b) D B $S'_6$ marg. जनः ( for द्विजः ). —d) $S'_5$ K °यत् (for °वत्).

664 b) $S'_{2\cdot3\cdot5}$ (marg. *sec. m.*) C व्यामोहो ( for °यामो ). —d) D B $S'_5$ (marg. *sec. m.*) 6 (marg.) विद्वेषो (for °देशो); D B $S'_6$ marg. [अ]भून्महात्मनाम् (for [अ]गाद्द्विजन्म°); $S'_3$ C conflated विद्वेषोऽगाद्.

665 a) $S'_2$ (evid. emened.) तदा; $S'_3$ धाती- (for धाटी-). —b) D B $S'_6$ (after corr.) °शनान्त (mislec. for S'ār. तु ) रैः. —c) D B $S'_6$ (after corr.) मार्गे न कैर्. —d) $S'_2$ अमन्यत (for अलभ्यत).

क्च स्नानं क्च ध्यानं तपः क्वच जपः क्वच ।
भिक्षार्थमटतां ग्रामानगात् कालो द्विजन्मनाम् ॥ ६६६ ॥

द्विजानामुपकारोऽभूदपकारमुखादहो ।
यत्तन्निर्वासिताः सर्वे पापं तीर्थेष्वनाशयन् ॥ ६६७ ॥

विदेशमगताः शुष्यत्कलत्रत्राणचिन्तया ।
म्लेच्छवेषा द्विजाः केचित्कश्मीरेष्वेव चाभ्रमन् ॥ ६६८ ॥

विच्छेत्तुमिच्छता विद्यां तेनापहृतवृत्तिभिः ।
लडितं प्रतिवेश्माग्रे पिण्डीलोभाद् द्विजैः श्ववत् ॥ ६६९ ॥

तुरुष्कदर्शने भक्त्या नतु द्वेषेण स द्विजान् ।
व्यप्लावयदतश्चास्मिन् हत्या न प्रजगल्भिरे ॥ ६७० ॥

इत्याख्याने स एवैषां मतस्य परिहारदः ।
द्वेषद्योतनशक्तानां कार्याणामेव दर्शनात् ॥ ६७१ ॥

---

666 d) D B $S'_6$ marg. महात्मनां (for द्विजन्म°).

667 a) D B $S'_6$ marg. लोकानाम् (for द्विजा°). —c) $S'_2$ (evid. emend.) ये (for यत् ); D सर्वे. —d) $S'_6$ पापतीर्थैर्न्य (marg. र्थेष्व) ना°.

668 $S'_{4\cdot5}$ K om., 668-678 in $S'_5$ supplied later *sec. m.* marg. —a) B erroneously आगताः, $S'_5$ (marg. *sec. m.*) °गमनाः (for °मगताः). —D om. 668[cd]. —c) $S'_{2\cdot3\cdot6}$ C B -वेशा. —d) $S'_2$ चावसन् (for चाभ्रमन् ); $S'_5$ after चाभ्रमन् (marg. *sec. m.*) 668 st. no.

669 $S'_{4\cdot5}$ K missing (cf. v. l. 668). —a) B विच्छेतुम् (sic). —b) $S'_{2\cdot3\cdot5}$ (marg. *sec. m.*) °हत- (for °हृत-). —c) $S'_{1-3\cdot6}$ C °ग्रं D B [अ] थ (for °ग्रे). —d) $S_{2\cdot3}$ पिण्ड-; D B $S'_6$ marg. जनैः (for द्विजैः).

670 $S_{4\cdot5}$ K missing (cf. v. l. 668). —b) D जनान् (for द्विजा°). —c) $S'_2$ व्यापादयत (for व्यप्लाव°). —d) $S'_{3\cdot5}$ (marg. *sec. m.*) $_6$ C हन्या (mislec. for S'ar. त्या); $S'_2$ हन्यात्ते (for हत्या न).

671 $\acute{S}_{4\cdot5}$ K missing (cf. v. l. 668). —a) $S'_1$ °ख्य···स (blank with dot); $S'_{2\cdot3\cdot5}$ (marg. *sec. m.*) $_6$ C °ख्यच्च (emended as in text with D); B (erroneously) $S'_6$ marg. °ख्यानेन वै तेषां (for °ख्याने स एवैषां); $S'_3$ एवैश्यां (sic). —b) $S'_{1-3\cdot6}$ C D B स (mislec. for S'ār. म) तस्य.

रत्नाकरं यमाश्रित्य ब्राह्मणा जगतीभृतः ।
पक्षरक्षां व्यधुः सोऽभूत् क्षुद्रभट्टोऽस्य वल्लभः ॥ ६७२ ॥

मलानोदीर्ननामानं यवनानां परं गुरुम् ।
वैदग्ध्याच्छङ्कमानः स द्रोहीति तमवन्धयत् ॥ ६७३ ॥

यतः प्रभृति स प्रापद् राज्यमच्छत्रचामरम् ।
ततः प्रभृति रोगार्तिरिव दर्शनदूषणा ॥ ६७४ ॥

स्वप्नेऽपि नात्यजत् सूहभट्टं घट्टितवैरिणम् ।
भोगः सद्वासना चातिशुद्धानां तपसां फलम् ॥ ६७५ ॥

तस्यैव फलपूर्णानामृतूनामिव मन्त्रिणाम् ।
मानस्य हानिसम्पत्ती भास्वतोऽधीनतां गते ॥ ६७६ ॥

एकस्मिञ् शाहिखाने स दृष्ट्वा मन्त्रपराक्रमौ ।
अत्यन्तचिन्ताचकितो निद्रां नापत् कदाचन ॥ ६७७ ॥

पश्यत्येवाविले सूहसर्पे सविषया दृशा ।
शाहिखानप्रदीपोऽभूत् तमः संहर्तुमक्षमः ॥ ६७८ ॥

---

672 $S'_{4\cdot5}$ K missing (cf. v. l. 668).

673 $S'_{4\cdot5}$ K missing (cf. V. l. 668). —a) M (evid. emend.) मला–; $S'_{2\cdot3\cdot5}$ (marg. *sec. m.*) $_6$ C -नोद्दी (mislec. for S'ār. र्दी) न–; D B –नोर्दैन–; M (erroneously) -नामा नु (for नामानं). —b) $S'_3$ वरं (for परं); M (erroneously) परो गुरुः.

674 $S'_{4\cdot5}$ K missing (cf. v. l. 668).

675 $S'_{4\cdot5}$ K missing (cf. v. l. 668). —a) $S'_2$ स्यहे- (for सूह-). —b) D घटित–.

676 $S'_{4\cdot5}$ K missing (cf. v. l. 668). —d) $S'_1$ [अ] धीत (after *p.m* corr. न) तां.

677 $S'_{4\cdot5}$ K missing (cf. v. l. 1. 668).

678 $S'_{4\cdot5}$ K missing (cf. v. l. 668). —a) $S'_1$ (after corr.) $_{2\cdot3;6}$ C D B पश्यन्नेवाविलं (mislec. for S'ār. ले). —b) $S'_{1-3\cdot6}$ C D B -सर्प (mislec. for S'ār. र्पे).

द्विजातिपीडया शास्त्रनिन्दया द्रोहचिन्तया ।
चिकित्सया च तस्याब्दैर्यातं त्रिचतुरैस्तथा ॥ ६७९ ॥

प्रजापुण्योदयेनेव प्रेरितो दुष्कृतोत्थितः ।
क्षयामयो दुश्चिकित्स्यो द्विजराजमशोषयत् ॥ ६८० ॥

अनालोक्यैवेन्दोरुदयमगमिष्यद्यदि शमं
समन्तान्नादित्योपलदहनराशिव्यतिकरः ।
किमद्रक्ष्यन्नायं तदुदयवशस्रावितुहिन-
द्युतिग्रावाम्भोभिः कृतधरणितापोपशमनम् ॥ ६८१ ॥

वर्षांस्त्रिचतुरानन्याञ्जीवेच्चेत्स न किं ततः ।
शाहिखानोदये पश्येदिहैव स्वांहसां फलम् ॥ ६८२ ॥

जीवत्येव ततः सूहभट्टे भीत्या पलायितम् ।
विश्वास्य लद्दराजं द्राग्हंसगौरौ बबन्धतुः ॥ ६८३ ॥

---

679 a) D B S″₆ marg. जनाति- (for द्विजाति-).
—After 679 D B S′₆ marg. ins. :

107* (B 891) दयावानिव दोषस्य हेतुमात्रपरीक्षया ।
संवृतौजा व्यलम्बिष्ट शाहिखानस्य बाधने ।
(B 892) वलीमुखमनोज्ञः स प्रजाभाग्यबलोदयात् ।
अनैषीद्भग्नतां शाहिखानचिन्तामणिं न च ।

[(1.1) D B दायवानिव दोषोस्य (emended as above). —(1.2) D संवृतोजा (emended as above with B)].

680 a) S′₄ D B [ए]व (for [इ]व). —b) S′₄.₅ (before *sec. m.* corr.) K पूरितो. —c) S″₃ D °कित्सो. —d) S′₂.₆ अशेषयत्.

681 a) S′₆ ( before corr. ) C समं. —b) S′₂.₃ om. न. —c) D B S′₆ (before corr.) अद्राक्ष्यत्; S′₂.₃ °न्नाथं (S′₂ °थ) (for °यं); S′₄ -वद (mislec. for S′ār. श-). S′₃ submetric -संस्रावि- (for -वशस्रावि-); D B -स्राव-. —d) S′₁.₃₋₆ K C D B (gram. assim.) -शमनैः ; S′₂ -शमनः (emended as in text with M).

682 a) B अन्याज् (sic).

683 c) S₂.₄₋₆ K C विश्राम्य (mislec. for S′ār. विश्वास्य).

श्रीधेनौ रागिणौ तौ द्वौ मदोदग्रौ वृषाविव ।
अन्योन्यशृङ्गभङ्गार्थं प्रावर्तेतां द्विजे मृते ॥ ६८४ ॥

कारायां मोचिते लद्दराजे हंसेन संयति ।
प्राणांस्त्यक्त्वा गौरभट्टः सुरस्त्रीणां मुदं व्यधात् ॥ ६८५ ॥

त्यक्त्वा गत्यन्तराभावात् करिकर्णविलोलताम् ।
पुंश्चल्येव पतिर्वृद्धो भेजे हंसस्तदा श्रिया ॥ ६८६ ॥

बालोऽपि शाहिखानोऽस्य नोत्सेकं सोढवान् पुनः ।
शशीव तिमिरस्फारं नहि तेजो वयोऽनुगम् ॥ ६८७ ॥

ठक्कुरैः सह सम्मन्त्र्य युवराजोऽथ मन्त्रवित् ।
लद्दराजं विनिघ्नन्तं हंसभट्टं रणेऽवधीत् ॥ ६८८ ॥

शाहिखानं प्रजारागो निम्नं पय इवाऽऽगमत् ।
अमन्दचूतसम्पत्तौ कुन्दं निन्दति षट्पदः ॥ ६८९ ॥

युवराजं जयोदग्रं परिरब्धुं समुत्सुका ।
राज्यश्रीः समयालाभाच्चिन्ताकुलमवर्तत ॥ ६९० ॥

स्नेहाद्विदग्धभावाच्च प्रजारागभरादपि ।
अधिकारभरं राजा युवराजे समार्पिपत् ॥ ६९१ ॥

मेरकेसरसंज्ञस्य तुरुष्कस्याऽथ दुर्मतेः ।
द्विपस्येव मदान्धस्य द्विष्टोऽभूत् तद्गुणाङ्कुशः ॥ ६९२ ॥

---

684 a) D -धनौ (sic). —d) S′1-5·6 (before corr.) K C प्रावर्तेते (emended as in text with D B).
685 a) S′1·4 लद्ध- .
687 d) S′2 नाहि (for नहि).
688 c) D लद्ध-. —d) S′2 हस- (for हंस- ).
689 d) D B S′6 (after corr.) निन्दन्ति; S′6 D (after corr.) B षट्पदाः.
690 b) S′2 -रब्धं जयो° (for -रब्धुं समु°).
691 d) S′3·5 (before corr.) 4 समर्पि°.
692 a) S′1-5·6 (after corr.) K C मेरकं (mislec. for S′ār. के) सर- ; D B मे (B मी) रकेसार- ; RSs2 मेरकमर- ,

सुचिरं मलिनै राज्ञो मानसं वारिदैरिव ।
पैशुन्यवर्षिभिर्नेतुं मालिन्यं न स्म शक्यते ॥ ६९३ ॥

भक्ते दक्षेऽनुजे स्निग्धे भूभृदाश्रितवत्सलः ।
अतिप्रेरणया तेषां राज्येऽप्युद्विग्नतामगात् ॥ ६९४ ॥

युवराजं सेवकांश्च रक्षितुं स्वान् महीपतिः ।
तीर्थानुसरणाकाङ्क्षी तमित्येवमवोचत ॥ ६९५ ॥

अनर्थितर्पणं वित्तं चित्तमध्यानदर्पणम् ।
अतीर्थसर्पणं देहं पर्यन्ते शोच्यतां व्रजेत् ॥ ६९६ ॥

दिग्गजेष्विव युष्मासु भूभारं न्यस्तवानहम् ।
पुरुषोत्तमसेवायै यते शेष इवापरः ॥ ६९७ ॥

शाहिखानार्णवः प्रेममन्दरान्दोलितस्ततः ।
वाणीं सुधाकरकलामीश्वराय नवामदात् ॥ ६९८ ॥

अस्तु सन्देहसन्दोहाद् दूरे तीर्थकदर्थना ।
द्वारं यशःसुकृतयोः प्रजापालनमस्तु वः ॥ ६९९ ॥

चिरस्य पालितां पित्र्यां हित्वा निःशरणां महीम् ।
नैर्घृण्येनैव शूरस्त्वमशक्तयैवाङ्क्यसेऽखिलैः ॥ ७०० ॥

---

693 b) $S'_2$ —b) मानसे.
694 a) $S'_1$ (after corr.) $_{2-6}$ K C स्निग्धो.
695 $S'_{3.5}$ (marg. *sec. m.*) C त्वम् (for तम्).
—For 695 D B. $S'_6$ marg. subst.:
108* (B 908) उन्मग्न इव भोगेषु निमग्न इव शुक्तिषु ।
स महम्मदखानं च शाहिखानमथाब्रवीत् ।
[(l. 1) B (evid. emend.) सूक्तिषु; मुक्तिषु (for शु°) may be considered. —(l.2) D B $S'_6$ (submetric) महद- (for महम्मद-)].
696 a) $S'_3$ अनर्थ- . —b) $S'_3$ अध्यास- ; $S'_1$ (after corr.) $_{2-4}$ C K -तर्पणम् (sic). —c) $S'_4$ (after corr.) $_5$ K -तर्पणं (for -सर्पणं). —d) $S'_3$ शोचितां. —696 cited in Vallabhadeva's *Subhāṣitāvali* No. 3038.
698 a) C साहि- . —ab) $S'_2$ प्रे···मन्द° (blank with dots).
699 a) D B -सन्दोहा दू .
700 c) $S'_1$ D [इ]व (for [ए]व); $S'_3$ C सूरस् ; D त्वाम् . —d) D B आशङ्क्य (for अशक्तया); B D $S'_6$ (after corr.) खलैः .

देवस्य यदि तीर्थानामुत्कण्ठा वर्ततेतराम् ।
आराधकानामस्माकं किमन्यत्कार्यमुच्यताम् ॥ ७०१ ॥

व्यक्तमित्युक्तवत्येव युवराजे नरेश्वरः ।
ईषत्स्मितरुचा चारुं पुनर्वाचमवोचत ॥ ७०२ ॥

प्रजानुपालनात् पुण्यं केवलात् कियदर्ज्यते ।
रसायनानामग्र्यं यदनेकरसचर्वणम् ॥ ७०३ ॥

देहात् पृथङ् निवसतो मद्भुजस्येव ते वत ।
दृष्ट्वा पराक्रमं शङ्का मदशक्तौ कथं भवेत् ॥ ७०४ ॥

एतावदपि वाक्यं मे यदि नैवानुतिष्ठसि ।
त्वयि सङ्कल्पिताः शेषास्तदाशाः सन्तु दूरतः ॥ ७०५ ॥

निर्बन्धेनेति जल्पन् स तीर्थार्थं धरणीपतिः ।
युवराजं हठाद्राज्यभारमग्राहयच्चिरात् ॥ ७०६ ॥

श्रीजैनोल्लाभदीनाख्यः सुरत्राणो भवन् भवान् ।
चिरं राज्यं क्रियादेवं राजास्याशिषमभ्यधात् ॥ ७०७ ॥

तीर्थदर्शनलोभेन स्वदेशान्निरगान्नृपः ।
न पुनर्युवराजस्य चित्तात्प्रेमार्गलाञ्चितात् ॥ ७०८ ॥

कोशसाराणि रत्नानि वाजिरत्नानि चार्पयन् ।
भ्रातरं वसतीर्द्वित्राः सोऽन्वगात् प्रेमगौरवात् ॥ ७०९ ॥

मार्गे क्लेशं प्रयत्नेन सिद्धिं तीर्थफलाल्पताम् ।
उक्त्वा मार्गे खला राज्ञस्तीर्थश्रद्धामखण्डयन् ॥ ७१० ॥

---

702 c) $S'_2$ -रु···रुं (blank with dots).
703 b) M (evid. emend.) इयत् (for कियत्).
704 b) $S'_2$ (evid. emend.) तत् (for ते); $S_{2\cdot3\cdot6}$ C तव (by metathesis) (for वत).
707 a) C (hypermetric) -जैनोल्लाहभ° (for -जैनोल्लाभ°); D °ल्लाव°.
—b) $S_{2\cdot3\cdot5}$ (marg. *sec. m.*) C B भवद्भ° (mislec. for S′ār. न्भ).
—d) M (evid. emend.) अप्यदात् (for अभ्यधात्).
708 d) $S_{1\cdot4}$ (before corr.) $_5$ K °लाञ्छितात् (sic).
709 a) $S'_{3\cdot6}$ C कोप-. —d) $S'_2$ [अ]नु (mislec. for S′ār. न्व)गात्; D B [अ]न्वयात्.

स्वजामातुस्तिरस्कारं मन्यमानेन मानिना ।
मद्रेन्द्रेणाथ भूपालो हठात्तीर्थान्निवर्तितः ॥ ७११ ॥

प्राप्तायां शरदि श्रेष्ठदशायामिव भूपतिम् ।
मद्रराजस्तमादाय कश्मीरान् प्रत्यगात्ततः ॥ ७१२ ॥

भ्रातुरागमनात्तुष्ट्या मद्रासारग्रहाद्रुषा ।
नवराजः प्रसादे च कालुष्ये च निमग्नवान् ॥ ७१३ ॥

क्षुद्रेष्वथ स मद्रेषु युवराजो महामतिः ।
भ्रातुः स्नेहाद्रुषं त्यक्त्वा राज्यत्यागं स्वयं व्यधात् ॥ ७१४ ॥

तन्न्यस्तं दिवसावसानसमये सूर्यस्य तेजो निजं
प्रत्यूषे प्रतिपादयन्नतिशयश्लाघ्यस्वतेजा भवन् ।
वह्निर्यज्वकुलैस्ततोऽपि दिवसे श्रद्धानुबन्धाकुलै-
स्तेजोवृद्धिपुषा नवेन हविषा यज्ञेषु सन्तर्प्यते ॥ ७१५ ॥

ठक्कुरैरन्वितो राजा पवनः कुसुमैरिव ।
कश्मीरेभ्यो गतः सर्वैर्देशाधीशैर्नतस्ततः ॥ ७१६ ॥

---

711 c) $S'_5$ महे (mislec. for S'ār. द्रे) न्द्रे°. —d) $S'_{2\cdot3\cdot5}$ (marg. *sec. m.*) C हारा (mislec. for S'ār. हठा) त्; D B $S'_6$ (after corr.) निवारित: (for निवर्तित:).

712 b) $S'_{4\cdot5}$ K भूपति: —c) $S'_1$ (hypermetric) स मद्रराजस् (for मद्रराजस् ); $S'_6$ तदा (mislec. for S'ār. मा°. Thus marg.). —After 713 D B $S'_6$ marg. inst. :

109* (B 927) देवस्योपद्रवं कार्षीर्मा मद्रेन्द्रचमूरिति ।
मद्देशठक्कुरं राजा तं निरोद्धुं विसृष्टवान् ।
(B 928) युद्धं विना निवार्तिन्यां सेनायां मद्रभूपतेः ।
आज्ञां विनाक्षमो योद्धुं व्यावर्तत स ठक्कुरः ।
[(l. 2 D B इयेष emended to महेश as above with P T)].

714 a) $S'_{2\cdot6}$ (before corr.) C समुद्रेपु —c) $S'_5$ (before corr.) K रुषां.

715 a) $S'_2$ °वसाह्न- (for °वसान-). —d) $S'_{1-6}$ K C D B -मुषा (emended as in text with M).

716 b) D B $S'_6$ (after corr.) पवनै: ; D कुसुम इव. —c) D B गतै:. —d) $S'_5$ K यतस् (for नतस् . Thus marg. *sec. m.* in $S'_5$).

सुखं तावदगाहिष्ट वीतनक्रां नदीमिव ।
ठक्कुरैरुज्झितां मद्रचमूः कश्मीरमेदिनीम् ॥ ७१७ ॥

अथ विस्तीर्णमाक्रान्तम् आलिशाहेन भूभुजा ।
पित्र्यं सिंहासनं तेन नतु सज्जनमानसम् ॥ ७१८ ॥

उद्यच्छेत कथं जडद्युतिरहो दूरोल्लसल्लाञ्छनो
गच्छेद्दीप्तकरो न चेद्दिनकरो लोकान्तरं स्वेच्छया ।
वीरेणात्यवहेलया विरचितोपेक्षो जयत्कातरः
सम्भाव्य स्वपराक्रमेण विजयं विश्वं तृणं मन्यते ॥ ७१९ ॥

शाखाभङ्गेन सच्छायमुद्यानं प्लवगा इव ।
मण्डलं क्षोभयामासुस्तुरुष्का राजसेवकाः ॥ ७२० ॥

कातरान्नाम भूपालादनिष्पन्ननियन्त्रणः ।
यवनो मेरकेसारो व्यधान्मण्डलविप्लवम् ॥ ७२१ ॥

अकार्षीन्मलिनो भृङ्गः सङ्कुचन्तीरिवाब्जिनीः ।
पौरनारीरनार्यः स हठसम्भोगदूषिताः ॥ ७२२ ॥

महाकरैर्मदेनान्धैः पङ्कसङ्कुलतां भजत् ।
अक्षोभि मण्डलं म्लेच्छैः सरो मरुगजैरिव ॥ ७२३ ॥

---

717 c) $S'_6$ C (gram. assim.) उज्झिता. —d) $S'_3$ -भूपः (for -चमूः).

719 a) $S'_2$ °च्छेतु; $S_6$ °च्छेत्तु (*sup. lin. pr. m.* तु); K °च्छते; $S'_4$ *pr. m.* marg. कथं; D जडो. — MS $S'_5$ ends with जडद्युतिरहो at folio 30[a]. —c) $S'_3$ विराहि (*pr. m.* marg. चि)तो; $S'_{2\cdot3}$ K °पक्षो; C (erroneously) ऽपक्षो; $S'_{1-4\cdot6}$ K C B जडः (emended as in text with D) का°.

720 d) K C तुरस्का.

721 a) $S'_2$ वाम (for °न्नाम). —b) $S'_3$ K C -निमन्त्रणः —c) $S'_{1-4\cdot6}$ K C D B मे (B मी) रकं (mislec. for S'ar. के) सारो (D रं).

722 d) $S'_{3\cdot4}$ K C हार (mislec. for S'ar. हठ-).

723 b) $S'_3$ -सङ्कुलता; $S'_{2\cdot3\cdot6}$ (before corr.) C भयात् (for भजत्). —c) $S'_2$ स्वच्छं; $S'_{1\cdot3\cdot4\cdot6}$ K C B स्वच्छैः (emended as in text with D).

मन्त्रिमन्त्रैरवार्याणां दिवसेऽप्यनिवर्तिनाम् ।
रक्षसामेव कश्मीरास्तदा हस्तवशं गताः ॥ ७२४ ॥

अराजकं वरं राज्यं न स्वामी तादृशः पुनः ।
अभूषणो वरं कर्णो न पुनर्लोहकुण्डलः ॥ ७२५ ॥

सद्म तुङ्गं वरो वाजी स्वच्छं वासो मणिर्महान् ।
स्वीकृतं यवनैस्तत्तद्यद्यच्छोभावहं प्रभोः ॥ ७२६ ॥

अकार्षीत् पञ्चषान्मासान् राज्यं स जडनायकः ।
प्रजापापविपाकेन न पुनः स्वेन कर्मणा ॥ ७२७ ॥

मालिन्यं सुमनःपथे प्रथयते दैन्यं निधत्ते दृशः
सूर्यालोकतिरस्कृतं च कुरुते संहारमाशा नयन् ।
उन्निद्रः कमुपद्रवं न तरसा कुर्वीत धूमोद्गमो
नोद्द्योतेततरां शिखी यदि महाज्वालाकलापाकुलः ॥७२८॥

श्रीसिकन्धरदत्तस्य राज्यस्य ऋणमात्मनः ।
निवारयितुकामेन स्वलक्ष्मीफलकाङ्क्षिणा ॥ ७२९ ॥

मद्रेन्द्रद्वेषपूर्णेन खुःखरस्वामिना ततः ।
नवराजोऽर्थितो दूतैर्निजदेशागमं प्रति ॥ ७३० ॥

---

724 c) $S'_{2\cdot6}$ इव (for एव). —c) K कश्मीरस्.

725 c) $S'_{2\cdot3\cdot6}$ C अभूषणौ ($S'_6$ marg. णो); $S'_{2\cdot3\cdot6}$ C कर्णौ ($S'_6$ marg. र्णो); $RSs_2$ वालो (for कर्णो). —d) $S'_{2\cdot3\cdot6}$ (before corr.) C -कुण्डलम्.

—After 725 D B $S'_6$ marg. ins. :

110* (B 941) हिमादग्निस्तमः सूर्याच्छला व्योम्नस्तदापतत् ।
यत्पालकोऽपि भूपालः सर्वलोकक्षयोऽभवत् ।

[(1.2) D यस्यालको (emended as above with B)].

726 c) $S'_1$ °स्तस्त (mislec. for S'ār. त्त) द्य°.

727 a) D B पञ्चप (B षा) ण्मा°.

728 a) $S'_{1-4\cdot6}$ K C °न: प्रथा: [$S'_{1\cdot3\cdot6}$ (before corr.)$_4$ था: (emended as in text with D B) ] —b) $S'_3$ -तिरस्कृतिं; D B $S'_6$ marg. -तिरस्क्रियां. —c) D B $S'_6$ marg. उद्रिक्तः (for °न्निद्रः); $S'_4$ धूमोद्यमो. —d) $S'_3$ K C B [उ]द्योतेत°.

729 a) $S'_{2\cdot3}$ $RSs_2$ -सेकन्धर-; K C -शिकन्धर-; D B से (B सि)कन्दर-.

730 a) $S'_1$ C महे (mislec. for S'ār द्रे) न्द्र-. —b) $S'_{2\cdot4\cdot6}$ K C D B खुःखुर—; $S'_3$ खुख्खुर-.

नक्रो न चेज्जलनिधेर्बहिरभ्युपेयात्
काकस्त्यजेन्न वनपादपमुन्नतं चेत् ।
आखुर्न चेद्गहनगर्तगुहां विमुञ्चे-
द्धन्तव्यतां कथमवाप्नुयुरेव तत्ते ॥ ७३१ ॥

आश्रयो युवराजस्य मद्द्विषो दीयतेऽमुना ।
जसथं प्रति भूपालः क्रोधादित्यभ्यषेणयत् ॥ ७३२ ॥

म्लेच्छच्छादितमाहात्म्यैरुद्विग्नैः सचिवैर्निजैः ।
अनिषिद्धोद्यममतिर्धूर्तैरुभयवेतनैः ॥ ७३३ ॥

युक्त्योपोद्बलितश्रद्धस्तथा द्वैराज्यजीविभिः ।
नवराजोदयं लेखमुखेन प्रापयिष्णुभिः ॥ ७३४ ॥

प्रसादलोभाद्यवनैरतिमात्रकृतस्तुतिः ।
नवराजजयोद्रेकश्रवणभ्रष्टसाहसैः ॥ ७३५ ॥

स्वसैन्यैर्दैन्यचकितैर्निन्द्यमानोद्यमो नृपः ।
मह्लेकं जसथं जेतुं प्रस्थानमकरोत्ततः ॥ ७३६ ॥

अभ्यमित्रीणतां तस्य कश्मीरेन्द्रस्य गच्छतः ।
आसीन्मित्रस्य सांमुख्यं नामित्राणां महीभुजाम् ॥ ७३७ ॥

---

731 [b]) $S'_{1\,3\cdot4\cdot6}$ (before corr.) C -वर (mislec. for S'ār. न-). —[c]) $S'_{1\cdot4}$ C -गुहा. —[d]) D B ह (B ध) तं (mislec. for S'ār. न्त) व्य°; $S'_6$ हन्त (*pr. m. sup. lin.* तं)व्य°.

732 [d]) D [अ]भिषे°.

733 [b]) $S'_3$ उद्विग्नैः. —[d]) $S'_{2\cdot3\cdot6}$ C दू (S'₂ मू mislec. for Sār. दू) तैर (for धूर्तैर्).

734 [a]) D -श्रद्धैस्.

735 [d]) B $S'_6$ (after corr.) -साहसः.

736 [c]) D B मलेकं.

737 [d]) $S'_{1-4\cdot6}$ K C D B न मित्राणां (emended as in text).
—After 737 D B $S'_6$ marg. ins.:

111* (B 954) स्वस्यात्यौन्नत्यमालक्ष्य शङ्कमानोऽथ पातकम् ।
खुज्याकादः समं मन्त्रममन्त्रयत मन्त्रिभिः ।
(B 955) मन्त्रविक्रममुख्यानि लक्षणानि क्व भूभुजाम् ।
अयं वालिशभावस्य भाजनं क्व जनाधिपः ।

यत्र यत्रागमन्म्लेच्छकटकः स मदोत्कटः ।
तत्र तत्र रजोव्याजात्तमो मूर्तमदृश्यत ॥ ७३८ ॥

पालनीयेषु देशेषु राजपुर्यादिषूद्धतः ।
परदेशेष्विवाकार्षीत् स लुण्ठनपराभवम् ॥ ७३९ ॥

प्राप्तेऽथ मुद्गरव्यालनामस्थानं महीपतौ ।
सन्देशमित्यमन्दौजाः प्राहिणोन्मद्रभूपतिः ॥ ७४० ॥

पत्तिलोकः ससम्पत्तिर्वाजिनो वेगराजिनः ।
भटा रणोद्भटाः सन्ति कटके तव यद्यपि ॥ ७४१ ॥

तथापि च्छलवन्धेषु प्रसिद्धेषु महीतले ।
यूयं खुःखरयुद्धेषु नैव नाम प्रगल्भथ ॥ ७४२ ॥

---

(B 956) अस्माभिर्निहिताश्चास्मिन्नुपदेशा हिता अपि । [5]
प्रतीपं यान्ति शशिनः पङ्कजे किरणा इव ।
(B 957) प्रागेव युवराजोऽभूदजय्योऽसह्यसाहसः ।
विशेषेणाद्य मद्रेशद्वेषाज्जस्रथमानितः ।
(B 958) राज्याश्रयेषु नास्मासु विश्वासी नूतनो नृपः ।
हारलुब्धस्य काम्यस्तु हारो न मणिभृत्फणी । [10]
(B 959) तस्मादस्माभिरेतेन युवराजो विजीयते ।
योग्याः प्राहुणकेनैव गृहे घ्नन्ति भुजङ्गमम् ।
(B 960) जीयमाने नरेन्द्रे न युवराजे निरङ्कुशाः ।
आयान्तु मण्डलं सर्वे साधयामश्चिकीर्षितम् ।
(B 961) इति सम्मन्त्र्य मन्त्री स युवराजाभियोजने । [15]
सोद्यमस्य नरेन्द्रस्य हेतुकर्तृदशामगात् ।

[(l. 2) B (evid. emend.) खञ्ज्या°. —(l. 5) B °श्रयि (mislec. for Dev. अपि). —(l. 8) D B -मानिनः (emended as above). —(l. 10) D B दाम्नस् (emended to काम्यस् as above with M). —(l. 12) B (evid. emend.) पाहुण° ; M (evid. emend.) प्राघुणि°; D [इ]व (emended to [ए]व as above with B). —(l. 13) D B नरेन्द्रेण (emended as above)].

738 b) D मदोद्धतः. —d) D B S′$_6$ marg. मूर्तं स्म दृश्यते.
739 d) S′$_{1\cdot4}$ लुण्टन– (sic).
740 a) S′$_2$ प्राप्तो (sic).
741 d) K तत्र (for तव).
742 a) S′$_2$ repeats तथापि; D B S′$_6$ marg. बद्धे (mislec. for S′ār. न्धे)षु. —c) S′$_2$ C B खुःखुर– ; S′$_3$ खुखुर– .

वयमेव तु जानीमः खुःखुराणां रणच्छलम् ।
अहिरेव भुजङ्गस्य पदं जानाति नेतरः ॥ ७४३ ॥

अतो यावद्वयं प्राप्तास्त्वत्सेवाविधिसिद्धये ।
भवद्भिस्तावदत्रैव स्थातव्यं पर्वतोपरि ॥ ७४४ ॥

मेद्रेशस्य स सन्देशो मन्दैर्यवनपुङ्गवैः ।
स्वायशोलब्धये ज्ञातो मदसम्मूढदृष्टिभिः ॥ ७४५ ॥

राज्ञि मूढेऽवरूढेऽथ मानादिव महीधरात् ।
ध्वजैर्वायुचलैर्यातं खुःखरेशबलाद् भिया ॥ ७४६ ॥

धावदश्वबलक्षोदात् तनीयसि महीतले ।
हर्षभीरससम्भेदे मज्जति स्म फणीश्वरः ॥ ७४७ ॥

अश्वक्षुण्णेऽस्रसंसिक्ते भूतलेऽसिकुशाञ्चिते ।
वीराः प्राणान् प्रतापाग्नौ तत्राजुहुवुराहवे ॥ ७४८ ॥

आलिशाहस्ततो राजा सिन्धौ प्रवहणं यथा ।
अभाग्यदुर्मरुद्वेगादभज्यत रणार्णवे ॥ ७४९ ॥

विश्वान्धङ्करणान्धकारनिकरग्रस्तस्य सूर्योदयं
हेमन्ते हिममारुतैर्हतधृतेः पुष्पाकराभ्यागमम् ।
दुष्टक्ष्मापतितर्जितस्य जगतो निर्दोषलेशं प्रभुं
लोकेशो जनयन् व्यनक्ति नितरां कारुण्यमत्युज्ज्वलम् ॥७५०॥

---

743 b) S′$_3$ खुखु°; S′$_4$ D खु:ख°. —c) S′$_6$ हरिर् (for अहिर्).
744 b) C B तत्° (for त्वत्°).
745 c) S′$_{1\cdot4\cdot6}$ K C D B स्वयशो° (emended as in text with S′$_{2\cdot3}$).
746 a) S′$_6$ रू (*sup. lin. pr. m.* मू )ढेऽव°; D B [अ]वतीर्णे (for °वरूढे).
—d) S′$_2$ K C B खु:खु°; S′$_3$ खुखु°.
747 c) S′$_4$ -धी- (for -भी-). —d) S′$_6$ फले (marg. णी) श्वर: .
748 b) C -क्त (mislec. for S′ār. कु)शा°; S′$_4$ -कुदा ( mislec. for S′ār. शा°).
749 d) D B S′$_6$ marg. भज्यते स्म (for अभज्यत).
750 c) K C जगतोर्; S′$_{2\cdot3}$ निर्देश- (for निर्दोष-). —d) S′$_2$ after अत्युज्ज्वलम् (figure) 21 (to denote Āli S′āha 21st ruler).

श्रीजैनोल्लाभदीनोऽथ कश्मीरानपकल्मषः ।
अनुकूलो विधातेव प्राविशद्विजयोर्जितः ॥ ७५१ ॥

सतां स्तुत्या दिशां भेर्या मुखानि ध्वनयन्नयम् ।
पौराणां प्राङ्मनः पश्चाद् राजधानीं नृपोऽविशत् ॥ ७५२ ॥

धीनैर्मल्यं जनस्याहो जातं राज्ञोऽभिषेकतः ।
प्रतापो वैरिणां शान्तस्तस्मिंश्छत्राणि बिभ्रति ॥ ७५३ ॥

तन्नीतिः पूर्वराजेषु कुण्ठोत्कण्ठाः प्रजा व्यधात् ।
गुणातिशायिनी या च शर्करेक्षुरसेष्विव ॥ ७५४ ॥

पूर्वराजव्यवस्थाः स विनष्टा नवयन्नभूत् ।
शिशिरोपहता वल्लीर्वसन्त इव भूपतिः ॥ ७५५ ॥

परस्पराधिकं शत्रूञ्जयद्भिर्दुर्जयानपि ।
शस्त्रैर्मन्त्रा जितास्तस्य मन्त्रैः शस्त्राणि च प्रभोः ॥ ७५६ ॥

कान्त्याङ्गं वदनं वाचा श्रियोरः क्षमया मनः ।
श्रितं पश्यन्त्यगाद् दूरं कीर्तिरीर्ष्यावशादिव ॥ ७५७ ॥

राज्ञः कलिदशामध्ये धर्म्या साम्राज्यपद्धतिः ।
अन्तर्दशेव शुशुभे शुभा कृतयुगस्य सा ॥ ७५८ ॥

भोगे सखा नये मन्त्री विवेक्ता शास्त्रनिर्णये ।
श्रीमहम्मदखानोऽभूत् कश्मीरेन्द्रस्य सोदरः ॥ ७५९ ॥

---

751 a) S′$_1$ °ल्लाब°; S′$_2$ °ल्लाभदेनो; D ल्लाबदेनो.

752 b) D B S′$_6$ marg. [अ]नुनयन् ( for ध्वन° ). —c) D प्रांगनः (corrupt) (for प्राङ्मनः).

753 a) D B S′$_6$ marg. श्री– (for धी–). —d) D B S′$_6$ marg. श (S′$_6$ शा)स्त्राणि (for छत्रा°).

754 a) S′$_4$ -राजेन. —c) S′$_{1-4.6}$ C B °तिशय (S′$_1$ [ before *pr. m.* corr. ] $_3$ यि) नी; K D °तिशायिनी (as in text).

755 c) D र् om. in वल्लीर्.

756 a) S′$_{1.3}$ D शत्रू (Kas′. speech-habit for त्र्) न्. —d) D visarga om. in प्रभोः.

758 d) S′$_{2.3}$ वा (for सा).

759 b) S′$_2$ विवक्ता. —c) D (submetric)-महाद– (for -महम्मद–).

किमन्यद् राज्यमेवासीच्छत्रचामरवर्जितम् ।
श्रीमहम्मदखानस्य कश्मीरेन्द्रप्रभावतः ॥ ७६० ॥

वसन्त इव कामस्य भूपतेरभवत् सदा ।
खुःखुराधिपतिस्तस्य भृत्येष्वभ्यधिकप्रियः ॥ ७६१ ॥

दुर्व्यवस्थां निवार्याहं देशेऽस्मिन् म्लेच्छनाशिते ।
इति राज्यपरिप्राप्तिफलं यावदचिन्तयत् ॥ ७६२ ॥

तावद् द्रोहोचितं कर्म द्रोग्धारो राजवल्लभैः ।
अपृष्ट्वैव महीपालं नीता वीतभयैः स्फुटम् ॥ ७६३ ॥

यशो दिशि श्रियं साधौ सुखं लोकेषु रोपयन् ।
व्यधात् प्रक्रमभङ्गं तं यच्छत्रूनुदमूलयत् ॥ ७६४ ॥

एकान्ता तिग्मता भानोर्म्रदिमा शशिनः पुनः ।
स द्वौ जेतुमिवापुष्यत् तत्संसर्गमयीं श्रियम् ॥ ७६५ ॥

असङ्ख्यानत्र सङ्क्षिप्ते तद्गुणान् वर्णयामि किम् ।
सृगालानां गुहामध्ये कथं हस्तिपतिर्वसेत् ॥ ७६६ ॥

तस्माच्छैलेन्द्रवच्चित्रे मकुरे सूर्यबिम्बवत् ।
न्यस्यामि तद्गुणाख्यानमत्र चित्ते त्रिलोकवत् ॥ ७६७ ॥

---

760 c) S′$_2$ (evid. emend.) -मुह° (for -मह° Kas′. speech-habit). —d) D B S′$_6$ marg. प्रसादतः (for °भावतः).

761 b) S′$_2$ वयस्यो भूपतेरभूत्; S′$_3$ भूपतेर्जंस्रथोभवत्; D B S′$_6$ (*sup. lin.*) सखा (for सदा). —c) S′$_3$ खुखु°; D खुःख°. —d) D B S′$_6$ (after corr.) °धिकं.

762 a) D B S′$_6$ (after corr.) °वस्था; D B S′$_6$ (after corr.) [अ]हो (for °हं).

764 d) S′$_3$ D यच्छतॄ (Kas′. speech-habit for त्र ) न् .

765 c) S′$_{2\cdot3\cdot6}$ K C सद्यो (for स द्वौ. Thus marg. in S′$_6$).

766 c) C B शृगा°.

767 a) B (evid. emend ) S′$_6$ (after corr.) चित्ते. —b) C B मुकुरे; D प्रति- (for सूर्य-). —d) S′$_2$ C B चित्रे.

शीतोष्णयोरिवोर्जादौ विषुवेऽहर्निशोरिव।
तस्य मानोऽभवत्तुल्यः स्वे परे वाऽपि दर्शने ॥ ७६८ ॥

राजा वणिगिवात्यर्थं तुलायाः पुटयोरिव।
साम्यभङ्गं दर्शनयोर्नाक्षमिष्ट कथञ्चन ॥ ७६९ ॥

शान्ते सिद्धाश्रमे सिंहैर्मृगा इव न पीडिताः।
तुरुष्कैः पुष्कलभयैर्ब्राह्मणाः पूर्ववत्तदा ॥ ७७० ॥

दोषाकरेण सूहेन येषां सङ्कोचिता स्थितिः।
व्यकासयत्ततो भास्वान् गुणिनस्तान् महीपतिः ॥ ७७१ ॥

रन्ध्रैरधोगतिं प्राप्ता कुल्येवोद्धृत्य भूभुजा।
विद्या प्रवाहिता तेन गुणिना गुणरागिणा ॥ ७७२ ॥

दोषच्छेदकरो राजा क्रमाद्भिषगिवानलम्।
कश्मीरेषु सदाचारमदीपयदुपक्रमैः ॥ ७७३ ॥

अहङ्कारागदङ्कारो राजा प्रकृतिवृद्धये।
दर्शनानां स धातूनामिवोल्वणमशीशमत् ॥ ७७४ ॥

कलेर्धर्मेण बलिना मात्स्यन्यायाप्रवर्तनम्।
अष्टलोकेशतेजोंशधारणस्यास्य लक्षणम् ॥ ७७५ ॥

---

768 a) $S'_{2-4}$ K C [उ]ष्णा (mislec. for S'ar. र्जा) दौ. —b) D विष्ववे.

769 b) $S'_{4.6}$ K C B पुण्य (mislec. for S'ār. ट)योर ; $S'_2$ पट°.

771 c) $S'_{3.6}$ K C B व्यकाश°.

772 b) $S'_{4.6}$ C भूभृता. —d) D B $S'_6$ (after corr.) गुणि– (for गुण–).

773 a) D B -च्छेदकरैः. —d) $S'_1$ (before corr.) अपीपयद् ; $S'_{3.4}$ K C अपीपद्यद् ; $S'_{2.6}$ अपीपलद् (for अदीपयद्. Thus marg. in $S'_6$).

774 a) D B $S'_6$ (after corr.) °दङ्कारौ. —d) D B [उ]ल्लव (B evid. emend. ल्लू)नम् .

775 a) $S'_{2.3.6}$ काल– ($S'_6$ marg. कलेर् ); $S'_4$ K C कर्ल– (for कलेर्); $S'_1$ *sup. lin. pr. m.* ना in बलिना; D B (erroneously) व्यच्छेदि (for बलिना). —b) $S'_{1-4.6}$ K C D B -न्याय– (emended as in text);

स सूहभट्टसंस्पर्शदुष्टायाः शुद्धये भुवः ।
प्रतापाग्निं ध्रुवं दीप्तमहाकाशमजिज्वलत् ॥ ७७६ ॥

राज्ञः सञ्चिन्वतो मन्त्रप्रपञ्चे पञ्चधा स्थितिम् ।
जिगीषयेव तस्यारिवर्गः पञ्चत्वमाश्रयत् ॥ ७७७ ॥

अनित्यबाह्यविद्वेषिनिर्जयस्तुतिसंस्तवः ।
नित्यान्तःस्थारिसंहर्तुस्तस्य प्रत्युत गर्हणा ॥ ७७८ ॥

शक्तोऽपि काश्यपीशक्रः शक्यानेवाभ्यषेणयत् ।
व्योम्नि यात्रां करोत्यर्कः सतारे ननु सोडुपे ॥ ७७९ ॥

नाजिगीषत् स तेजस्वी शत्रून् विभवतृष्णया ।
हरिर्मांसादिलोभेन हिनस्ति नहि हस्तिनः ॥ ७८० ॥

शैलेषु तद्द्विषो भानुप्रतापाधिदवश्रमैः ।
प्रायश्चित्तीयितुं पञ्चतपस्त्वं ध्रुवमाश्रयन् ॥ ७८१ ॥

प्रावर्तिष्ट महिष्ठोऽपि नोत्पथेन स जातुचित् ।
राकेन्दुर्न निशारम्भं विना जात्वप्युदेति यत् ॥ ७८२ ॥

---

S′$_{1-4}$ K C प्रवर्तिन (K त)म् (S′$_1$ *pr. m.* marg. as in text). —c) S′$_4$ C -लोके सत°.

776 c) S′$_2$ °ग्निभुवं (for °ग्निं ध्रु°).

777 a) S′$_{2\cdot4\cdot6}$ (before corr.) K °न्वता. —b) S′$_{2\cdot3\cdot6}$ (before corr.) K C -प्रपञ्चं (mislec. for S′ār. ञ्चे); S′$_2$ स्थितम्. —c) S′$_2$ [ए]व (for [इ]व).

778 a) S′$_4$ C -वाह्म- (sic); S′$_6$ -विद्वेपान्नज- (marg. °पिनिर्ज) य-. —b) S′$_{3\cdot4}$ K C -नर्जय- (sic); S′$_{2\cdot6}$ -सम्भ (mislec. for S′ār. स्त) वः. —d) D (erroneously) लक्षणा (for गर्हणा).

779 a) S′$_2$ -कान्तः (for -शक्रः).

780 b) S′$_{1\cdot3}$ D शतॄ (Kaś. speech-habit for त्रू)न्. —c) S′$_2$ सिंहो (for हरिर्).

781 b) D °दि° (for °धि°). —c) S′$_2$ श्चित्त°. —d) S′$_4$ K C anusvāra om. in -तपस्त्वं.

782 a) M (evid. emend.) प्रावर्तत; S′$_{2-4\cdot6}$ K C महीष्ठो. —d) D B S′$_6$ marg. [अ]भ्युदे°; S′$_2$ [अ]यम्; S$_4$ यम् (for यत्).

गर्वं प्रवृद्धा वास्तव्या हीना मैव क्षयं गमन् ।
इति नीतिविदा राज्ञा तेभ्यो बलिरगृह्यत ॥ ७८३ ॥

वैरिकीर्तिर्जुहोतु स्वं विक्रमस्य वियोगतः ।
वताहौषुर्द्विषः स्वं तत्प्रतापे विरहाच्छ्रियः ॥ ७८४ ॥

डिल्लीशापीडितं जातु जस्सथं शरणागतम् ।
द्रोणीगुहासु सोऽरक्षत् तमोऽद्रिरिव भास्करात् ॥ ७८५ ॥

तस्मिञ्शासितरि क्षोणीं विनेतरि दुरात्मनाम् ।
जयापीडपुरस्थस्य भूमिदेवस्य कस्यचित् ॥ ७८६ ॥

शष्पग्रासाभिलाषाद्वा विधातुर्वा नियोगतः ।
उदाचिताप्यगाद् धेनुर्मूर्तैवाशा स्वधाभुजाम् ॥ ७८७ ॥

गतो मडवराज्यं स तीर्थस्नानाय जातुचित् ।
स्वां परिज्ञातसङ्केतां गां परिज्ञातवान् द्विजः ॥ ७८८ ॥

सनिश्चयो गृहं यान्तीं सायं तामनुगम्य गाम् ।
विवादमकरोद् वेश्मस्वामिना सह तत्र सः ॥ ७८९ ॥

---

783 a) $S'_{2-4}$ गर्वं–; M (evid. emend.) गर्वात्, marg. धर्मप्रवृद्धया. —b) $S'_2$ नैव (for मैव). —ab) $S'_1$ marg. *pr. m.* gloss प्रवृद्धाः गर्वं मैव गमन् एवं हीनाः क्षयं मैव गमन्.

784 a) $S'_{2\cdot4}$ जुहोतु (sic). —cd) $S'_1$ वता……प्रतापे विरहाच्छ्रियः blank filled as in text with D B; $S'_{2-4\cdot6}$ K C वताग्निसदृशे राज्ञः प्रतापे संहितश्रिया. —c) $S'_6$ (gram. assim.) राज्ञि (after corr. °ज्ञः). —d) K C सहितत् (for °तं).

785 a) $S'_{2\cdot4}$ K ढिल्ले ($S'_4$ K ल्लो)श–; $S'_6$ डि (*inf. lin.* ढि)ल्लीश–; D -पतितं (for पीडितं). —d) D B भास्करादिव (by transp.).

786 a) $S'_4$ C क्षौणीं. —c) D जयपीडा–.

787 a) $S'_{3\cdot4\cdot6}$ (marg.) C B स($S'_{3\cdot4}$ C श)स्य (for शष्प–); C -ग्रामा° (mislec. for S'ār. सा). —c) $S'_1$ K C तदा चित्वा; $S'_{3\cdot4}$ त (mislec. for S'ār. उ)दाचित्ता; D B उदाचिता (as in text); $S'_2$ कदाचित्का° (for उदाचिता°). —d) $S'_2$ °वौस्रा; $S'_6$ (after corr.) $S'_4$ °वाष्पा (sic) (for °वाशा); $S'_{2\cdot4}$ C B सुधा°.

789 a) D B $S'_6$ (after corr.) -निश्चयं. —b) $S'_4$ K C सायन्तम्.

तौ लोभानिश्चयग्रस्तावशान्तकलहावुभौ ।
महीपालसभास्थाने विवादं कर्तुमुद्यतौ ॥ ७९० ॥

तयोरशक्तयोर्जेतुमुपपत्तिं परस्परम् ।
शृङ्गाटानि परीक्षार्थं गोरग्रे व्यकिरन्नृपः ॥ ७९१ ॥

सा बाल्ये ग्रसनाभ्यासाच्छीघ्रमाघ्राय सस्पृहा ।
गौरभुङ्क्त फलानीव ननु तत्संततिश्चिरम् ॥ ७९२ ॥

सभायां राजनैपुण्यं स्तुवत्यां कृतनिश्चयात् ।
दण्ड्येनाजिग्रहद् दण्डं भाण्डं राजा द्विजन्मना ॥ ७९३ ॥

तस्य दाक्षिण्यदक्षस्य प्रजानां हितहेतुना ।
पुत्रे मन्त्रिणि मित्रे वा दुष्टे नालक्ष्यत क्षमा ॥ ७९४ ॥

अपराधं विना जायां क्षीबो निघ्नन् प्रियोऽपि सन् ।
मेरे-श्कारोऽपि यवनो वधं भूपेन लम्भितः ॥ ७९५ ॥

शत्रुपक्षे निकारं स क्षिपन् क्षितिपुरन्दरः ।
अकरोदादरं नित्यं योगिनां न नियोगिनाम् ॥ ७९६ ॥

---

790 c) $S'_6$ -मध्ये (for -स्थाने). —d) D विषादं.

791 b) $S'_4$ उपपत्तं (sic).

793 b) $S'_{1-4\cdot 6}$ (before corr.) K C स्तुवत्य (emended as in text with D B); D कृत्य- (for कृत-). —c) $S'_{1-4}$ K C दण्ड्येवा (mislec. for S'ār. ना°); D B $S'_6$ (after corr.) दण्डेना°; D B $S'_6$ (after corr.) दण्ड्यं (for दण्डं). —d) D B $S'_6$ (after corr.) भाण्ड्यं; D B $S'_6$ (after corr.) -जन्मनाम्.

794 a) $S'_4$ -दक्षिस्य (sic). —d) $S'_{1-4\cdot 6}$ (before corr.) K C वा° (mislec. for S'ār. ना). —179 repeated as 794.

795 a) $S'_4$ अपराधी. —b) $S'_3$ क्षेत्री; $S'_4$ क्षीत्रो (sic). —c) $S'_{1-4\cdot 6}$ K C D B मे($S'_{2\,3}$ भे, D B मी) रेशायो (emended as in text with PT.), see NOTES. —M (evid. emend.) मीरीसाको. —d) $S'_3$ D लंबित:.

796 d) $S'_{1-4\cdot 6}$ K C नय ($S'_6$ after corr. यि) योगिनाम्; D B नियोगिनाम् (as in text).

पराक्रमश्च नीतिश्च तस्यान्येषां च भूभुजाम्।
करुणा च विवेकश्च यस्मिन् राजनि राजति ॥ ७९७ ॥

कामो वियोगिवर्गस्य करोत्यपचितिं सदा।
निर्विकारः स्मरो योगिवर्गस्यापचितिं व्यधात् ॥ ७९८ ॥

सौम्या भीमा गुणा यस्मिन्नवसन् नवसङ्गमम्।
क्वान्यत्र सागराद् दृष्टा विषामृतजलानलाः ॥ ७९९ ॥

चिरं स्थेयैरुपात्तोऽर्थिप्रत्यर्थिभ्यां धनग्रहः।
तेन धर्मप्रवृत्तेन सद्वृत्तेन निवारितः ॥ ८०० ॥

केनापि हेतुना पूर्वं लौलराजद्विजन्मना।
भूप्रस्थदशकात्प्रस्थो विक्रीतो लेख्यपूर्वकम् ॥ ८०१ ॥

बालानां नोनराजादिपुत्राणां तदुदीर्य सः।
विक्रयाब्दे ब्रह्मभूयं लौलराजोऽगमत्ततः ॥ ८०२ ॥

नोनराजाद्यसामर्थ्यात् प्रस्थग्राहैरभुज्यत ।
अविक्रीतमपि प्रस्थनवकं बलिभिस्ततः ॥ ८०३ ॥

एवं कृते दशप्रस्थीभोगे तैर्बलिभिश्चिरम्।
नवभोगाय कपटं कृतं विक्रयपत्रके।
विक्रीतं प्रस्थदशकमिति वर्णानलेखयन् ॥ ८०४ ॥

---

797 b) $S'_{1-4\cdot6}$ (before corr.) K C तेषां ($S'_2$ षा); D B [अ]न्येषां (as in text). —d) $S'_{2-4}$ राजनि (for °ति).

798 c) D B $S'_6$ marg. स्म यो (°रो). —c) $S'_4$ याङ्गि (sic) (for योगि-).

799 a) $S'_4$ C भीम°.

800 ab) $S'_4$ [अ]र्थि······भ्यां; $S'_2$ °त्तो······र्थि° (blank with dots). —c) $S'_4$ धर्मश्चवृ° (sic).

801 c) D B $S'_6$ *sup. lin.* -दशके. —d) D B $S'_6$ (after corr.) लेख-.

802 b) $S'_{1-4\cdot6}$ K C तमु (mislec. for S'ār. दु)दीर्य.

803 b) $S'_{2\cdot4}$ प्रस्था-; D B -ग्राह्यैर्. —b) M (evid. emend.) अगृह्यत (for अभुज्यत). —d) B (evid. emend.) चिरात् (for ततः).

804 a) D B $S'_6$ (after corr.) -प्रस्थ-. —b) D B चिरात्. —c) $S'_4$ नग-; $S'_6$ (before corr.) K C नय- (for नव-). —e) $S'_4$ (evid. emend.) विप्रीतं (for विक्रीतं).

तस्मिन् राज्ञि विचारज्ञे नोनराजस्य नन्दनः ।
बलाद्धृतां भुवं राजसभायामहमाक्षिपम् ॥ ८०५ ॥

प्रत्यर्थिभिरथानीतं भूर्जं राजाज्ञया नृपः ।
युक्तिज्ञः सलिलस्याऽन्तर्वाचयित्वाक्षिपत्ततः ॥ ८०६ ॥

नष्टेषु नववर्णेषु पुराणेषु स्थिरेष्वथ ।
भूप्रस्थमेकं विक्रीतमिति सभ्यानवाचयत् ॥ ८०७ ॥

राजा कीर्तिमहं भूमिं कूटकृद्दण्डमद्भुतम् ।
प्रजाः सुखं खला भीतिं प्राप्तवन्तः समं ततः ॥ ८०८ ॥

---

—After 804 [cd] D B $S'_6$ marg. ins. :

112* (B 1029) व्यञ्जनाग्रस्थितैकाररूपज्ञानाय लेखकाः ।
रेखां पूर्वं व्यञ्जनानां पश्चाद्भागे किलालिखन् ।
(B 1030) कालान्तरे लिपेर्भेदादुपर्यद्यतनाः पुनः ।
व्यञ्जनानां लिखन्त्येव रेखामेकारबोधिकाम् ।
(B 1031) भूप्रस्थमेकं विक्रीतमिति विक्रयपत्रके । [5]
ते मकारस्थितैकारबोधिरेखापदे ततः ।
(B 1032) भूप्रस्थग्राहिणो धूर्ता दकारं समलेखयन् ।
मकारं ते शकारं च कारयामासुरञ्जसा ।
(B 1033 [ab]) भूप्रस्थमेकं विक्रीतमिति विक्रयपत्रके ।

[(l. 2) $S'_6$ (gram. assim.) पूर्वा. —(l. 8) B (evid. emend.) सकारं].

805 [a]) $S'_{1\cdot2\cdot4\cdot6}$ K C B तेसिन् (emended as in text with $S'_3$ D); $S'_2$ विचारस्थे.

806 [a]) $S'_{2\cdot4}$ K C तू (K तृ)र्ण (mislec. for S'ār. भूर्जं); $S'_3$ भूर्ण (sic); $S'_6$ पत्रं (marg. भूर्जं).

807 [b]) D B स्थितेषु.

808 [a]) $S'_1$ (f. 34[a], line 8) कीर्तिं । महं (sic). —[d]) $S'_{1\cdot3}$ C प्राप्नु° (mislec. for S'ār. प्त) वन्तः; $S'_{2-4\cdot6}$ K C B समन्ततः.

इन्दो राहुभयं कदाऽपि कुरुते कालः कलाः पूरयन्
सिञ्चन्सञ्चिनुते तडिन्निपतनक्षोभं तरोर्वारिदः ।
वेधाः सत्पुरुषस्य सर्वजगतामाह्लादनायोदयं
कुर्वन्नामयदर्शनेन कुरुते भीतिप्रकर्षं क्षणम् ॥८०९॥

अवाधिष्टतरां कष्टो विषस्फोटः कदाचन ।
प्रकोष्ठं भूमिपालस्य प्रजानां हृदयं च सः ॥८१०॥

माघमासीव पुष्पाणां म्लेच्छप्रालेयबाधया ।
न लाभो विषवैद्यानां देशेऽस्मिन्नभवत्तदा ॥८११॥

यज्वा गारुडशास्त्रज्ञः शिर्यभट्टो नृपानुगैः ।
अत्रान्विषद्भिरातोऽथ कूपोऽध्वन्यैर्मराविव ॥८१२॥

चिकित्सायां विदग्धः स म्लेच्छभीत्या व्यलम्बत ।
स्फुलिङ्गदग्धः पुरुषः स्पृशत्यपि मणिं चिरात् ॥८१३॥

स्वयं दत्ताभयो राज्ञा प्राप्तस्तमुदमूलयत् ।
शिर्यभट्टो विषस्फोटं करीव विषपादपम् ॥८१४॥

तस्य कीर्तिः सुखं राज्ञः प्रजानां हर्षसन्ततिः ।
प्रारोहंस्त्रीणि विस्फोटे तत्रैकस्मिन्विपाटिते ॥८१५॥

---

809 [a]) K C काला (for °ल.). —[b]) M (evid. emend.) संतनुते (for सञ्चिनुते); $S'_4$ C -क्षोभ-. —[c]) $S'_{1-4\cdot6}$ K C [उ]द्यमं; D B $S'_6$ marg [उ]दयं (as in text). —[d]) $S'_2$ क्षणात्.

810 [a]) D B °तमां. —[c]) $S'_4$ K C सा (for सः).

811 [b]) $S'_{3\cdot4}$ $RSs_{1\cdot2}$ -प्रलय- (for -प्रालेय-).

812 [b]) $S'_{2-4\cdot6}$ K C $RSs_{1\cdot2}$ शिव-(mislec. for S'ār. र्य-). —[c]) $S'_{3\cdot4}$ K C [अ]न्विय°; $S'_{2\cdot6}$ (before corr.) °ष्यद्भिर; $S'_4$ आसो(sic) (for °प्तो); D B $S'_6$ *sup. lin.* [अ]त्र (for [अ]थ). —[d]) $S'_4$ C भरौ (for मरौ).

813 [b]) $S'_1$ वि(sic) लम्बत.

814 [b]) $S'_1$ D B (alliterative) प्राज्ञस् (for प्राप्तस्). —[c]) $S'_{2-4\cdot6}$ K C शिव (mislec. for S'ār. र्य. Thus marg. in $S'_6$).

815 [a]) D visarga om. in कीर्तिः. —[b]) $S'_4$ प्राज्ञानां (for प्रजा°).

तुष्टेन भूभुजा दत्तां यथेष्टमपि सम्पदम् ।
नैक्षिष्ट शिर्यभट्टः स यतात्मेव वराङ्गनाम् ॥ ८१६ ॥

---

816 b) $S'_1$ सम्पदा (sic) मं. —c) $S'_{2-4\cdot6}$ K C शिव (mislec. for S'ār. र्य-).

—After 816 D B $S'_6$ (on separate folio) ins. :

113* (B 1046) उद्दाहपातकवशादिव निर्घृणः सन्
दग्ध्वा तृणं तृणकृशानुरुपैति शान्तिम् ।
जाताम्बुवाहकरुणाप्रणयात्तृणस्य
कान्तिः पुनः शतगुणा मसृणाभिरामा ।
(B 1047) क्ष्मां सन्तापयता गाढमाषाढेनेव वारिदाः । [5]
सूहभट्टेन संशुष्य पराभूता ययुर्दिशः ।
(B 1048) वर्षा मरुदिव क्ष्मापस्तद्विद्याप्रत्ययोत्सुकः ।
आनाययत्स तान्सर्वान्पण्डितान्निजमण्डलम् ।
(B 1049) मुक्ताहारोपमे देशे विद्वद्रत्नानि नायकः ।
कान्त्या वा सुधिया तत्र यथायोगं न्यवीविशत् । [10]
(B 1050) राजा संरोपितानर्घवृत्तिदानेन पण्डितान् ।
आप्याययज्जलेनेव मालाकारो महीरुहान् ।
(B 1051) नाशितं सूहभट्टेन यद्यत्कश्मीरमण्डले ।
योजितं शिर्यभट्टेन राजप्रार्थनयाऽथ तत् ।
(B 1052) प्रवर्त्य यागयात्रादि नागानां भट्टशिर्यकः । [15]
तुरुष्कापहृतां भूमिं विदग्धेभ्यो न्यदापयत् ।
(B 1053) उदये दापिते तेन हिन्दुकानामखण्डिते ।
शिर्यभट्टाय चुकुपुः सर्वे यवनदानवाः ।
(B 1054) महापद्मफणीन्द्राम्भः संभेदे कुम्भकेन सः ।
बद्धोऽपि द्वतिवत्स्थित्वा यवनेन्द्रान् व्यलक्षयत् । [20]
(B 1055) तापो यस्याह्नि शैलाञ्ज्वलयति स रविः सायमक्ष्णापि गम्यः
स्वग्राव्णः शुष्यतोऽह्नि द्रवयति न शशी पूरकः सायमब्धेः ।
कारुण्यादेव लोके निजमतिसकलं स्वेच्छया दर्शयित्वा
तं तद्भाग्यावसानात्प्रथममथ महांस्तूर्णमन्तर्दधाति ।

(B 1056) कलौ पातकिनां पुंसां स्पर्शदर्शनविह्वला । [25]
अवश्यं शारदा देवी तदाऽन्तर्धानमाश्रयत् ।

(B 1057) मुखे स्वेदो भुजे कम्पः पादस्पर्शे विदाहिता ।
जातुं जात्वभवद्देव्या नो तदा हि तथा क्वचित् ।

(B 1058) द्रोहार्जिताद्धनाद्भागं प्रसादेन नियुञ्जति ।
कश्मीरलोके सा देवी नानुग्रहपरा ह्यभूत् । [30]

(B 1059) दूर्वामात्रेण तुष्यन्ति विशुद्धेन हि देवताः ।
प्राणैरपि न मालिन्यदूषितैर्जातुचित्पुनः ।

(B 1060) कलिकालेऽपि देव्याः स प्रभावोऽपि शमं गतः ।
जात्वित्यगान्नृपो देवीं द्रष्टुं तद्यात्रिकैः सह ।

(B 1061) नदीं मधुमतीं स्नानपानाभ्यां फलयन्नयम् । [35]
शारदाक्षेत्रमासीदत्सीदत्परिषदाकुलम् ।

(B 1C62) देवीभक्ताभयोद्युक्तो व्यंक्तुं तच्छक्तिमुद्यतः ।
युक्तायुक्तविवेक्ता स तत्र राजा न्यविक्षत ।

(B 1063) तत्रापि तेषां दौरात्म्यदर्शनाद्विस्मितो नृपः ।
भक्तिह्रासमगाद्देव्यां यात्रिकेषु च कोपिताम् । [40]

(B 1064) साक्षात्त्वद्दर्शनं देवि देवानामपि दुर्लभम् ।
अस्माभिर्नाऽर्थनीयं तत् कलिकालकलङ्कितैः ।

(B 1065) अशक्तानां भवद्रूपं निष्कलं ध्यातुमर्चितुम् ।
भक्तिभाजामनुक्रोशाद्यत्तु रूपं त्वमग्रहीः ।

(B 1066) तवास्यां प्रतिमायां चेद्व्यपेतो नैव सन्निधिः । [45]
पवित्रयतरामद्य स्वप्ने तद्दर्शनेन माम् ।

(B 1067) अस्माभिश्च ततः सा त्वं यथाशक्ति निषेव्यसे ।
मिथ्याभक्तदुरात्मत्वात्त्वं चेद्दूरमितो गता ।

(B 1068) किमर्थं प्रतिमा तर्हि गर्हिता हिन्दुवैरिभिः ।
विज्ञप्येति स सप्तम्यां भाद्रे राजा जितेन्द्रियः । [50]

... ... ... त्रयदण्डं निवार्य सः ।
द्विजानां जातिरक्षार्थं रौप्यमाषमकल्पयत् ॥ ८१७ ॥

---

(B 1069) अशेत शारदाक्षेत्रप्रासादस्थण्डिलोपरि ।
दर्शितं न यदा स्वप्ने किञ्चित्सन्निधिसूचकम् ।
(B 1070) राज्ञाष्टानवते वर्षे स्वां मूर्तिं देव्यचूर्णयत् ।
नारयाऽदादृर्शनं देवी म्लेच्छसंसर्गतो ध्रुवम् ।
स्वामी भृत्यापराधेन गर्हणीय इति स्थितिः । [ 55 ]
(B 1071) देवीदर्शनविच्छेदि तस्य नासीद्धि किञ्चन ।
दया सत्यं विवेकश्च तमेवाश्रयते तदा ।
(B 1072) व्यावृत्य यवनानां स वनानामिव वारिदः ।
हर्षोत्कर्षवशोऽकार्षीन्महत्कनकवर्षणम् ।
(B 1073) यत्र दण्ड्या न दण्ड्यन्ते दुर्बलास्तरकरं विना । [ 60 ]
भूपतेः प्राड्विवाकत्वं स प्रापद्भट्टशिर्यकः ।
(B 1074) प्रतिजानंस्तदा कोशधनसम्भवने सति ।
स्वगलच्छेदनं भट्टो मिथ्यावक्तुश्च विप्लवम् ।
(B 1075) शाखाभङ्गसमुद्भूतशब्दव्याप्तचतुर्दिशाम् ।
समुदीरयतां नूनमब्राह्मण्यं पदे पदे । [ 65 ]
(B 1076) द्रुमाणां फलनम्राणां जनानां नमतां गुणैः ।
छेदाद्रक्षामकार्षीत्स जिष्णुरिन्धनहेतुना ।

[(l. 1) D B उ(D त mislec. for S'ār. उ)द्दाह– (emended as above with M). —(l. 8) D B अनायत् (emended as above). —(l. 11) M (erroneously) अर्ह– (for अर्ध–). —(l. 12) B अप्या°. —(l. 15) D B प्रवृत्त्य (B त्य) (emended as above with M); B शिर्यभट्टकः. —(l. 23) M (evid. emend.) -शकलं. —(l. 24) तत्° (for तं) is suggested. —(l. 33) M (evid. emend.) तु (for first ⌊अ⌋पि). —(l. 37) B (evid. emend.) वक्तुं (for व्यंक्तुं). —(l. 43) B निष्फ (mislec. for Dev. ष्क)लं. —(l. 46) B (evid. emend.) त्वर्द्° (for तद्). —(l. 53) B °नवतौ. —(l. 55) cf. 611ab. —(l. 57) M (evid. emend.) °श्रयत.]

817 d) $S'_6$ रूप्य–.

—For 817 D B $S'_6$ (on separate folio after 113*) subst. :

114* (B 1077) प्रतिवर्षं रौप्यपलद्वयमात्रसुदुर्ग्रहः ।
जातिरक्षार्थमासीद्यश्चण्डो दण्डो द्विजन्मनाम् ।

(B 1078) शिर्यभट्टमुखेनैव तं निवार्य नरार्यमा ।
प्रतिवर्षं रौप्यमाषं तेषां दण्डमकल्पयत् ।

[(ll. 1, 4) D राप्य- (emended as above with B). —(l. 2) D B यच्च (mislec. for S'ār. श्च)ण्डो].

—After 114* D B $S'_6$ (on separate folio) ins. :

115* (B 1079) मांसादिलोभान्निघ्नत्सु मण्डलेषु मिषेण गाः ।
गोमांसकुण्डीर्ग्राह्यादिवारणात्स न्यवारयत् ।

(B 1080) पत्यौ मृतेऽन्यं गच्छन्त्या विहितं भर्तृगोत्रजैः ।
स महामतिमाञ्शूद्र्या विप्लवं विन्यवारयत् ।

(B 1081) न्यवारयत्स पुत्रीणामौर्ध्वदैहिकविप्लवम् । [5]
अपुत्रस्य विपन्नस्य लुब्धैस्तद्गोत्रजैः कृतम् ।

(B 1082) शिशूनां शास्त्रपाठादि सूहभट्टेन नाशितम् ।
वृत्तिदानेन विदुषां विद्यावानानयत्पुनः ।

(B 1083) विधिरसुनोः स्वाभिवित्तिं द्विजदेहे महीपतिः ।
व्यधत्त तिलकव्याजाद्विभागं सत्यधर्मयोः । [10]

(B 1084) ग्रामाणां प्रथमे वर्षे सङ्क्रान्तं कारकान्तरैः ।
पत्तलाघोषदेशेषु लोत्रदण्डं न्यवारयत् ।

(B 1085) निवार्य शाकटतुलामानकूटं चिरस्थितम् ।
अर्घव्यवस्था वस्तूनां प्रतिमासमकारयत् ।

(B 1086) बहिर्देशागतार्थानां देशकालाद्यपेक्षया । [15]
व्यवस्थाप्यार्घमुत्पिञ्जमच्छिनद्दिनमोषणम् ।

(B 1087) विदग्धः शिर्यभट्टोऽपि नोत्कोचफलमादित ।
अविनाशि पुनर्धर्मफलं वर्षोपकारतः ।

(B 1088) देहस्थैवार्थिनां ज्ञानरसविज्ञानकाङ्क्षिणाम् ।
तदेच्छासिद्धिरभवद्राज्ञः पुण्यफलाद्द्रुतम् । [20]

मुषितो ग्रामसीमायां ग्रामेभ्यः प्रापितो धनम् ।
अरण्येऽरण्यनाथेभ्यः पान्थस्तेन महीभुजा ॥ ८१८ ॥

हासाः श्मशानदेवीनां सूहभट्टं प्रतीव तम् ।
प्रतिस्थानं विमानानि प्रेतानामद्युतंस्तदा ॥ ८१९ ॥

म्लेच्छैरुपद्रुतां क्षोणीमक्षीणकरुणो नृपः ।
उदहार्षीत्क्रमादेवं दानवैरिव केशवः ॥ ८२० ॥

उच्चाङ्गान्स नयन् भङ्गं निम्नानापूरयन् नृपः ।
स्वकीर्तिबीजवापार्थमनुद्घातां महीं व्यधात् ॥ ८२१ ॥

---

(B 1089) महाश्रीशिर्यभट्टस्य मुखाद्राजा न्यवारयत् ।
धर्मप्रकाशनामानं राजकाङ्कटिकं प्रभुः ।
(B 1090) दूरं निवारयामास निर्धारणपदाङ्कितम् ।
भाविनां भूमिपालानां दुर्व्यवस्थापथार्गलम् ।
(B 1091 ab) अस्थापयत्स धर्मस्थः सद्वृत्तं प्रातिपत्तनम् । [ 25 ]

[(l. 1) D B निम्नन्स (prob. mislec. for S'ār. त्सु); D B विपण (emended as above). —(l. 3) D B मृत्से (emended as above); D [अ]न्ये (mislec. for S'ār. न्यं). —(l. 9) B विधित्सु¯स्वाभि¯ ¯ङ्गि°; M (evid. emend.) विधित्सुः स्वमभिज्ञानं; D (before corr.) -पतेः. —(l. 11) D B °कातु (mislec. for S'ār. न्त)रैः, see NOTES. —(l. 14) D B जन्तूनां (emended as above with M). —(l. 15) D °देंशग° (emended as above with B). —(l. 16) D B [अ]र्थम् (emended to °र्थं° as above with M). —(l. 20) B (evid. emend.) तदिच्छा–].

818 a) $S'_{2-4\cdot6}$ K C $RSs_2$ स्था($S'_4$ स्या)पितो (for मुषितो. Thus marg. in $S'_6$). —b) D B $S_6$ marg. प्रापयद् (for प्रापितो). —c) $S_{1-4\cdot6}$ K C D नाथ(D था)श्च (emended as in text with B. Thus marg. in $S'_6$).

819 a) $S'_2$ हासः; D हासात्. —c) $S'_1$ -स्था*. —d) $S'_{2\cdot4\cdot6}$ (before corr.) K C अच्यु (mislec. for S'ār. द्यु)तंस्.

820 a) $S'_{4\cdot6}$ (before corr.) C B क्षौणीम्.

821 $S'_2$ om. 821cd.

भूपतेः परदारेषु निष्कौतुकमयं व्रतम् ।
अभज्यत परं तस्य परश्रीपरिरम्भणे ॥ ८२२ ॥

सम्यग्दशबलेनाऽथ सर्वज्ञेन महीभुजा ।
सौगतस्तिलकाचार्यो महत्तमपदे कृतः ॥ ८२३ ॥

स शिर्यभट्टस्तिलकः स सिंहगणनापतिः ।
सोपानान्यभवन्नुच्चपदारोहे द्विजन्मनाम् ॥ ८२४ ॥

मेदिन्याखण्डलस्याऽऽसीत् पिकस्येव रसश्रिया ।
अखण्डं रसपाण्डित्यं ब्रह्मकुण्डलसेवया ॥ ८२५ ॥

कर्पूरभट्टो निर्दर्पः प्राणरक्षो महीभुजः ।
गुणिनां शरणं चक्रे स्वगुणैः सुरभिं सभाम् ॥ ८२६ ॥

पूर्वाब्दग्रहसञ्चाराद् उत्तराब्दग्रहस्थितिम् ।
रुप्यभट्टो विदन्नासीद् विनैव गणितश्रमम् ॥ ८२७ ॥

श्रीरामानन्दपादानां भाष्यव्याख्या क्षणे क्षणे ।
वीक्षते शारदाक्षोणीमेव सम्भ्रान्तमानसा ॥ ८२८ ॥

---

822 b) $S'_{2-4}$ K C निष्क($S'_2$ ष्का)र्ति (mislec. for S'ār. ष्कौतु)क°.

823 a) $S_{1\cdot2\cdot4\cdot6}$ (before corr.) K C -द(mislec. for S'ār. ब)ल°. —b) D सर्वे (mislec. for S'ār. वँ)ज्ञेन.

824 a) $S'_{2-4\cdot6}$ K C $RSs_2$ शिव(mislec. for S'ār. यँ-). —b) M (evid. emend.) सिंहो. —c) $S'_1$ सोपाना*भ°; $S'_4$ K C [अ]भवन्तश्च (mislec. for S'ār. न्नुच्च); $S'_{2\cdot6}$ (evid. emend.) [अ]भवंस्ते च).

826 a) $S'_1$ -भट्टो···प्रा° (blank filled as in text with D B); $S_{2-4\cdot6}$ K C यः श्रीमान् (for निर्दर्पः ). —b) $S_{1-4\cdot6}$ K C प्राणि- (emended as in text with D B. Thus *sup. lin.* in $S'_6$). —d) $S'_1$ स्वगु*सु°; $S'_2$ सगुणैः, $S'_{2\cdot4}$ सभम्.

827 c) $S'_{2-4\cdot6}$ (before corr.) K C रुप्य-, B रूप्प-.

828 b) $S'_1$ बाष्य-; $S'_4$ K C बाष्प- (emended as in text with $S'_{2\cdot3\cdot6}$ D B); C क्षणं क्षणं; D B क्षणेक्षणम्. —c) $S'_3$ वी˙दा°; $S'_{1\cdot2\cdot4\cdot6}$ K C वी···ते (blank filled as in text with D B. Thus in $S'_6$); $S'_{2-4\cdot6}$ (before corr.) K C दा (mislec. for S'ār. शा)रदा-; $S'_4$ C -क्षौणीम्. —d) $S'_{1-4\cdot6}$ K C (blank with dots for 828d, filled as in text with D B. Thus in $S'_6$).

गान्धारसिन्धुमद्रादिभूभुजस्तस्य भूभुजः ।
ग्राम्या इवाभवन्नाज्ञाकारिणो जितवैरिणः ॥ ८२९ ॥

युद्धे जितं ततो बद्धं खुःखेरेन्द्रेण भूपतिः ।
मालदेवं मद्रराजमाज्ञया निरमोचयत् ॥ ८३० ॥

राजा राजपुरीराजं नयज्ञः स्वपदातिभिः ।
क्षणाद् भ्रूभङ्गमात्रेण रणसूह्मलोठयत् ॥ ८३१ ॥

उदभाण्डपुराधीशं सिन्धुराजोपबृंहितम् ।
स कन्दुकमिवोत्थाप्य मुहुर्मुहुरपातयत् ॥ ८३२ ॥

भौट्टभूमौ महीन्द्रेण गोग्गदेशे कदाचन ।
बाणा गौरखरास्त्रेण गुणैर्लोकाश्च रक्षिताः ॥ ८३३ ॥

समिज्जिते शयादेशे क्रूरादेशो महीपतिः ।
सुवर्णबुद्धप्रतिमां यवनेभ्यो ररक्ष सः ॥ ८३४ ॥

---

829 a) C °द्रि° (by syll. contam. for °दि°). —cd) K om. 829cd
S′₁₋₄ C (blank with dots for 829cd, filled as in text
with D B. Thus later in S′₆).

830 b) S′₂ K C B खुःखु°; S′₃ खुखु°; S′₄ खःखु°; RSs₂ खख्ख°; M
(evid. emend.) खुक्खु°. —c) D B S′₆ (after corr.) -देशं;
(for °वं).

831 S′₂·₃·₄ om. hapl. 831 (in S′₃ recorded marg. *sec. m.* with
dotted blank for b and ending with figure 830 st. no.).
—a) S₁·₆ (before corr.) K C -राजा (emended to °जं as in
text with D B). —b) S′₁·₆ K C (blank with [S′₆ orig.
without] dots for 831b, filled as in text with D B. Thus
in S′₆). —c) C °द्रु (mislec. for S′ar. भ्रू) भङ्ग-.

833 a) S′₂·₆ (after corr.) D B भोट्ट-; D महेंद्रेण. —b) RSs₂
(erroneously) गंगा- (for गोग्ग-). —c) S′₄·₆ C B °स्त्रेण. —d) B
(evid. emend.) S′₆ (after corr.) रक्षिता:.

834 a) M (evid. emend.) °तेऽशया-. —b) S′₄ °देशे (for °देशो).
—c) समन्ल- for सुवर्ण- is suggested, see NOTES.— D B S′₆
(after corr.) -प्रतिमा.

कषाकरङ्कषस्तस्य निकषो भौट्टतेजसाम् ।
अप्रकाशां प्रतापोऽथ सल्लतनगरीं व्यधात् ॥ ८३५ ॥

केवलं हृदयं शून्यं भौट्टानां नाभवत्तदा ।
भूमिपालभयावेशात् कोषोऽपि चिरसञ्चितः ॥ ८३६ ॥

प्रकृतीनां ददद्राजा शोषाप्यायौ यथोचितम् ।
प्रत्यवेक्षामकार्षीत् स शालीनामिव कर्षकः ॥ ८३७ ॥

नासहिष्टेव तच्चापं तुलां शार्ङ्गपिनाकयोः ।
दूरकार्यार्थसाधिन्या धनुष्मत्ता भुवः पुनः ॥ ८३८ ॥

अस्तं यस्तमसां कुलानि वलतो नेतुं सदा वाञ्छति
क्षीणं तं वसुनाऽभिपूर्य शशिनं संवर्धयत्यञ्जसा ।
काश्यप्यामवकाशमात्रघटनां शाखामुखै रुन्धतो
वृक्षान् वृष्टिभरैश्च योऽस्य कतमो भानोस्तुलामर्हति ॥८३९॥

---

835 a) $S'_{2-4}$ K C कपाकः (K C क)···ङ्क($S'_3$ K ङ्ख)यंस ; $S'_1$ -करङ्कपंस (emended as in text with D B); $S'_6$ (orig.) कथाकः ङ्कयंस् (after corr. as in text). —b) D (before corr.) निकोषो; $S'_{2\cdot6}$ (after corr.) D B भोट्ट-. —c) D B $S'_6$ (after corr.) प्रकाशो (for प्रतापो). —d) $S'_{1\cdot4\cdot6}$ K C स (or म [$S'_6$ *inf. lin.* कु]) ल्लत prob. a mislec. for S'ār. भ- ); D B कुलल्त-.

836 b) $S'_{2\cdot6}$ ( after corr. ) K D B भोट्टानां. —MS $S'_1$ ends with भोट्टानां in 836[b] at the last line of folio 35[a].

837 °$S'_1$ missing (cf. v. l. 836). —b) $S'_{2-4\cdot6}$ K C शेषो° (emended as in text with D B). — d) $S'_{2\cdot3\cdot6}$ D B कार्ष (D B $S'_6$ र्षि)कः.

838 $S'_1$ missing ( cf. v. l. 836 ). — a) $S'_{2-4\cdot6}$ K C [इ]व; D B [ए]व (as in text). —d) $S'_3$ धनुर्मत्ता; $S'_{2-4\cdot6}$ (before corr.) K (?) C ध्रुवा (emended as in text with D B).

839 $Ś_1$ missing ( cf. v. l. 836 ). —a) D तमहो प्रदोष (for तमसां कुलानि). —c) $S'_4$ काश्यथाम° (sic); $S_{2-4\cdot6}$ K C रुद्ध (mislec. for S'ār. न्ध)तो. —d) $S'_{2-4\cdot6}$ C वृक्षाद्वृ° ( mislec. for S'ār. न्वृ); K दृष्टि- (for वृष्टि-).

लद्दराजसुतं राजा नोस्नतं यमवर्धयत् ।
अहृतद्रविणं तं स द्रोहीति निरवासयत् ॥ ८४० ॥

मक्कदेशागतो जातु पुस्तकाडम्बरं वहन् ।
सैदालनामा यवनो राजेन्द्रं तमुपागमत् ॥ ८४१ ॥

गुणान् विकत्थमानं तं गुणिरागी नरेश्वरः ।
उपागच्छत् प्रतिदिनं दर्शनायेतरो यथा ॥ ८४२ ॥

स तस्य पटहस्येव राजाऽपश्यत् क्रमादसौ ।
अन्तःसारविहीनत्वं परीक्षायां विचक्षणः ॥ ८४३ ॥

म्लेच्छमस्करिणि क्षोणिप्राणेशो निर्गुणेऽपि सः ।
प्रेमाणं नामुचत् पुत्रे पितेव करुणार्णवः ॥ ८४४ ॥

प्रदोषस्येव तमसां दुर्घनस्येव विद्युताम् ।
दोषाणां बहुता तस्य प्रजाः समुदवेजयत् ॥ ८४५ ॥

तस्मिन्नवसरे कश्चिद्योगिराजो जितेन्द्रियः ।
न्यविक्षतोन्नते स्तम्भे योगाभ्यासस्य सिद्धये ॥ ८४६ ॥

---

840 $S'_1$ missing (cf. v. l. 836). —a) D लद्ध–; $RSs_2$ लद्द (mislec. for द्द–). —b) D B $S'_6$ (after corr.) नोस्नथं. —c) $S'_{2\cdot4}$ अहृत–.
841 $S'_1$ missing (cf. v. l. 836). —a) $S'_3$ B मक्र–. —c) $S'_{2-4\cdot6}$ (before corr.). K C सदौल–; (prob. by shifting of mātrā-sign); $RSs_{1\cdot2}$ सदैल–; D B $S'_6$ (after corr.) सैदाल– (as in text).
842 $S'_1$ missing (cf. v. l. 836). —cd) $S'_{2-4\cdot6}$ K C उपागच्छ··· (blank filled as in text with D B. Thus in $S'_6$).
843 $S'_1$ missing (cf. v. l. 836). —a) D B ध्वनतः (for स तस्य). —b) D B $S'_6$ marg. तस्या° (for राजा°).
844 $S'_1$ missing (cf. v. l. 836). —a) B (evid. emend.) $S'_6$ (after corr.) क्षोणी–; $S'_4$ C क्षौणि–. —d) D B $S'_6$ (*sup. lin. pr. m.*) °मयः (for °र्णवः).
845 $S'_1$ missing (cf. v, l. 836). —b) $S'_4$ K C दुर्जं (mislec. for $S'$ār. र्घं)न°; $S'_2$ दुर्जं (marg. *pr. m.* र्घं)न°; D B दुर्दिन°; $S'_6$ दुर्घं (marg. र्जं [as in C] and र्दिं [as in B]) न°.
846 $S'_1$ missing (cf, v. l. 836). —c) $S'_2$ °तोन्नत–.

स्तम्भोपरि नवाहानि निराहारमपश्यतः ।
तस्याऽऽशिषेव महिषी राज्ञः पुत्रमजीजनत् ॥ ८४७ ॥

तपस्यतस्तथा तस्य तत्र तन्नवमं दिनम् ।
राज्ञस्त्वनवमं पुत्रजन्मकालमहोत्सवैः ॥ ८४८ ॥

अत्यर्थदर्शनद्वेषात् मदिरामदमोहितः ।
स म्लेच्छसहितो योगिराजं तमवधीच्छरैः ॥ ८४९ ॥

---

847 $S'_1$ missing (cf. v. l. 836). —c) D B ⌊इ⌋व (for ⌊ए⌋व). —d) D राज- (for राज्ञः).

848 $S'_1$ missing (cf. v. l. 836). —a) D B ततस् (for तथा). —b) D B $S'_6$ marg. तदभूत् (for तत्र तत् ); $S'_4$ तत्र (mislec. for S'ār. न्न) वमं ; D नवभं (mislec. for S'ār. मं). —c) $S'_3$ नवमः (visarga ins. later). —d) $S'_{2-4\cdot6}$ K C -महोत्सवः; D B $S'_6$ (after corr.) -महोत्सवैः (as in text).

—After 848 D B $S'_6$ marg. ins. :

116* (B 1122) हेमन्तान्ते पतति तुहिनं फाल्गुणे वल्गुवल्गद्
दीपस्यापि स्फुरति सुतरां शान्तिकालेऽतिदाहः ।
शैत्योद्रेकं वहति वहति ग्रीष्मकाले तुषारं
वस्तु प्रायः प्रथयति निजं धर्ममायाति नाशे ।
(B 1123) तपःकवचमस्पृष्ट्वा तमधो मार्गणैर्गतम् । [5]
प्रहर्तुरिव निर्देष्टुं भविष्यन्तीं तथा गतिम् ।
(B 1124) राजमान्यं तमालोक्य कुप्यन्तं शान्तमानसः ।
निर्णयाद्चलद्वर्णी नयान्नतु भयोदयात् ।
(B 1125) स स्तम्भान्न महाधैर्यादवारोहन्महामनाः ।
नैवाऽऽरोहज्जगद्दृष्टिं सद्यो द्यामपि योगवित् । [10]
(B 1126) अतिथिं योगपथिकं मा वधीर्मामिति ब्रुवन् ।
म्लेच्छमस्करिणा वर्णी खड्गघातैरचूर्ण्यत ।

[(l. 1) B (evid. emend.) फाल्गुने ; B (erroneously) फल्गु (for वल्गु-). —(l. 3) B (evid emend.) वृहति (for first वहति). —(l. 4) D B नाशम् (emended as above). —(l. 6) D प्रहर्तार् (emended as above with B); B (evid. emend.) यथा° (तथा). —(l. 10) M (evid. emend.) दृष्टौ.

849 $S'_1$ missing (cf. v. l. 836). —c) D B $S'_6$ marg. -मस्करी (for सहितो).

संततैर्मलिनैः स्थूलैर्जनानां तद्विलोकनात् ।
भूतले पतितं बाष्पैरपवादैश्च राजनि ॥ ८५० ॥

पृथ्वीनाथोऽथ तच्छ्रुत्वा शुद्ध्यर्थमिव मग्नवान् ।
भीह्रीशोकक्रुधाश्चर्यकृत्यचिन्तार्णवेषु सः ॥ ८५१ ॥

प्रथमोद्भूतपुत्रेऽपि तस्मिन्नह्नि महीभुजा ।
नास्नायि नाभ्यवाहारि न व्यवाहारि नाकथि ॥ ८५२ ॥

अन्येद्युर्भूपतिः पृष्टस्मृतिज्ञगुरुकोविदः ।
हन्तुर्दण्डं वधं शृण्वन् करुणायन्त्रितोऽभवत् ॥ ८५३ ॥

प्रतीपं खरमारोप्य प्रतिहट्टं परिभ्रमम् ।
नरमूत्राभिषिक्तस्य कूर्चस्य परिकर्तनम् ॥ ८५४ ॥

ष्ठीवनं सर्वलोकानां प्रेतान्त्रैर्बाहुबन्धनम् ।
जीवन्मरणमादिक्षद् दण्डं तस्य कृशायतेः ॥ ८५५ ॥

राजनि म्लानिहीनानि दिक्सौगन्ध्यवहानि च ।
अपतन्नाकपुष्पाणि पौराशीर्वचनानि च ॥ ८५६ ॥

मद्रराजदुहित्रोः स चतुरस्तनयान् नृपः ।
यथा दशरथो राजा जनकान्तानजीजनत् ॥ ८५७ ॥

ज्यायानादमखानः स हाज्यखानस्तथा परः ।
खानो जस्सरथः खानो बहरामश्च संज्ञितः ॥ ८५८ ॥

---

851 $S'_1$ missing (cf. v. l. 836). —c) D ह्रीभी- (by transp.). —d) D °रयेषु (for °र्णवेषु).
852 $S'_1$ missing (cf. v. l. 836). —d) $S'_{2-4.6}$ K C व्यवाहारि न (by transp.).
853 $S'_1$ missing (cf. v. l. 836). —c) D हर्तुं (mislec. for S'âr. न्तु)र ; $S_4$ वधे (mislec. for S'ār. धं ).
854 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2.4}$ K C D -भ्रमन् ($S'_4$ °त्). —c) D °भिषक्त°. —d) $S'_{2-4}$ K C -कीर्तनम् (emended as in text with $S'_6$ D B).
855 $S'_1$ missing (cf. v. l. 836). —b) D B $S'_6$ marg. यन्त्रणम् (for -बन्धनम् ). —d) D B $S'_6$ marg. मृपायते:; $S'_2$ K कृशाकृते: .
858 $S'_1$ missing (cf. v. l. 836). —a) $S'_{4.6}$ K C B आदाम–; $S'_2$ आध (mislec. for S'ār. दा)म–. —b) $S'_{3.4}$ C हेज्या- . —c) $S'_4$ खानेज°; $S'_4$ K C visarga om. in जस्सरथ: . —d) $S'_{2-4}$ K C बहे($S'_2$ हु)राम°.

क्षीरार्णवस्य मथनात् परतः सुधादि-
रत्नानि तान्यनुपभोगनिरर्थकानि ।
यो नीतवान् सफलतां किल पात्रदानात्
स्तुत्यः स मन्दरगिरिर्गिरिराजवर्गे ॥ ८५९ ॥

नदीखटपातेन भुवश्चाऽम्बु विनाऽफलाः ।
संयोगात् सफलीकृत्य यशश्चित्रमजीजनत् ॥ ८६० ॥

राज्ञोत्पलपुरक्षोणौ कुल्यां प्रापय्य वप्रिणीम् ।
तयोर्निरर्थकत्वेन दूषणा विनिवारिता ॥ ८६१ ॥

नन्दशैलमरौ कुल्यामवतार्य महीपतिः ।
अस्मारयच्चक्रधरं सागरान्तर्निवासिनम् ॥ ८६२ ॥

करालम्बः सतां बिभ्रदकरालं सितं यशः ।
कुल्ययाकारयद् देशं करालाख्यं स्तुतेः पदम् ॥ ८६३ ॥

साग्रहारा द्विजा यत्र साग्रहाराश्च योषितः ।
साऽथ जैनपुरी राज्ञा कराले निरमीयत ॥ ८६४ ॥

---

—After 858 D B $S'_6$ marg. ins. :

117* (B 1137) हिन्दवः सूहभट्टेन बलाद्यै पीडिता भृशम् ।
परदेशं गतास्ते तु बिभ्रतो वेशकल्पनाम् ।
(B 1138) निजाचारे रता नित्यं तदाचारद्विषो हृदा ।
स्वमाचारमनुष्ठातुं प्रेरिताश्च द्विजर्बलात् ।
(B 1139) दारिताः स्वत्राणभयादुत्कोचार्पणतत्पराः । [5]
रक्षिता भूमिपालेन तदुपद्रववारणात् ।

[(l. 3) D नित्यास् (emended as above with B)].

859 $S'_1$ missing (cf. v. l. 836). —a) $S'_2$ सुषादि–; —d) $S'_{2-4\cdot6}$ (before corr.) K C -वेगम् ($S'_3$ °ग:) (emended as in text with D B).

860 $S'_1$ missing (cf. v. l. 836). —a) -पाटेन. —b) $S'_{2-4\cdot6}$ K C नद्याश् ; D B $S_6$ marg. भुवश् (as in text).

861 $S'_1$ missing (cf. v. l. 836). —a) $S'_4$ C -क्षौणौ. —b) $S'_{2,4}$ प्रापय.

862 $S'_1$ missing (cf. v. l. 836). —b) K C °तार्य्य. —d) D °सिताम्.

863 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4}$ K C °लम्भ: (mislec. for S'ār. म्ब:). —c) $S'_{3\cdot4\cdot6}$ (before corr.) K C °रयन्दे° (mislec. for S'ār. दे°).

अवन्तिपुरभूमौ च कान्तोदन्तेन भूभुजा ।
कुल्यावतारितातुल्या शालिसम्पत्तिशालिनी ॥ ८६५ ॥

गिरिमार्गेण गङ्गाया मानसं प्रापिते जले ।
किं पूतं मानसेनेदममुना किमु मानसम् ॥ ८६६ ॥

व्यडम्बयत् स्वमूर्तिं या मानसे प्रतिबिम्बिताम् ।
व्यधायि तत्तटे तेन नगरी सफलाभिधा ॥ ८६७ ॥

श्रीमान् सुय्यपुरात् पारेवितस्तं धरणेर्नृपः ।
संयोज्य पहरं तापव्यापदं स न्यवारयत् ॥ ८६८ ॥

---

866 $S'_1$ missing (cf. v. l. 836). —c) D B $S'_6$ marg. पूता; D B $S'_6$ marg. [इ]यम् (for [इ] दम्). —d) D B $S'_6$ marg. अनया (for अमुना). —$S'_4$ K C repeat 864, 865 and 866 after 866.

867 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4}$ K C D मूर्तिर् (emended as in text with B $S'_6$); $S'_{2-4}$ K C D यां (gram. assim. ?); $S'_6$ यो (for या). —b) $S'_{2-4}$ K C D B मानस- (emended as in text). —c) $S'_{2-4}$ K C विधाय (emended as in text with D B); $S'_6$ (after corr.) विधायि (conflated). —d) $S'_{2-4\cdot6}$ K C सफलायिता ($S'_4$ °तां [doubtfully emended as in text with D B]).

—After 867 D B $S'_6$ marg. ins. :

118*(B 1149) श्रीस्वयस्य यमानेतुं प्रज्ञा न स्फुटमस्फुरत् ।
श्रीसेकन्दरशाहोऽपि कुण्ठोत्कण्ठोऽभवत्तराम् ।
(B 1150) श्रीजैनोल्लाभदेनस्तमानीय पहरं नदम् ।
प्रासिध्वद्विंशतिक्रोशाञ्छ्रीमान्स्वयपुरे मरुम् ।
(B 1151) दुर्भिक्षव्याप्तचित्तानां विश्रान्तिजनान्नृणाम् । [5]
विश्रान्तिसंज्ञया कुल्या प्रसिद्धाभूत्पदे पदे ।

[(l. 1) D आनीतुं (emended as above with B). —(l. 2) B (evid. emend.) °सिकन्दरसाहो. —(l. 3) B (evid. emend.) °ल्लावदी°. —(l. 4) D प्रसिश्चत् (emended as above with B). —(l. 5) D -यात्तचितानां (emended as above with B)].

868 $S'_1$ missing (cf. v. l. 836). —a) $S'_6$ D B स्वय्य- (B °य-); $S'_4$ -पुराधारे. —b) D -वितस्तां. —c) $S'_4$ K C संयोज्यं; $S'_{2-4\cdot6}$ (before corr.) K C प्रसरत् (emended to पहरं as in text with D B).

आ प्रद्युम्नगिरिप्रान्तादमरेशपुरावधि ।
मठाग्रहारहट्टाढ्यां स जैननगरीं व्यधात् ॥ ८६९ ॥

स्वर्गं जेतुमिवोदस्थादुन्नतैरश्मवेश्मभिः ।
सङ्क्रान्ता जैनगङ्गायां फणिलोकस्य यागमत् ॥ ८७० ॥

जैनगङ्गां रणस्वामिप्रासादे प्रापितां कृती ।
व्यसस्मरत् स्मेरयशा हरिपादकुतूहलम् ॥ ८७१ ॥

पारेसुय्यपुरं जैनगिरिसंज्ञां पुरीं व्यधात् ।
कैलासाचलतुल्यैर्या प्रासादैरभिभूषिता ॥ ८७२ ॥

सिद्धक्षेत्रे सुरेश्वर्यां प्रसिद्धो विलसद्यशाः ।
राजधानीं निषिद्धारिर्व्यधात् सिद्धिपुरीमसौ ॥ ८७३ ॥

प्रासादशिखरे राजा मार्तण्डामरनाथयोः ।
राजधान्यौ व्यधात् सौधधौतदूरनभस्तले ॥ ८७४ ॥

सुभिक्षं सुय्यराजेन पूर्वमङ्कुरितं किल ।
ततः प्रभृत्यतीतेषु बहुष्वपि च राजसु ॥ ८७५ ॥

---

869 $S'_1$ missing (cf. v. l. 836). —c) $S'_6$ -हर्म्या° (for -हट्टा°. Thus marg.); D हटा°.

870 $S'_1$ missing (cf. v. l. 836). —a) $S'_3$ नेतुम्; $S'_{2-4\cdot6}$ K C उदस्ताद् (emended as in text with D B). —d) D B $S'_6$ (after corr ) -लोकं च.

871 $S'_1$ missing (cf. v. l. 836). —b) $S'_4$ K C प्रसादं; $S'_{2\cdot3\cdot6}$ (before corr.) प्रासादं (mislec. for S'ār. दे). —c) $S'_{2-4\cdot6}$ K C D B व्यसिस्मरत् (emended as in text).

872 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2\cdot6}$ D B -स्वय्य- (B °य-); $S'_{3\cdot4}$ C स्नान- (for जैन-). —c) $S'_{2\cdot4\cdot6}$ (before corr.) K C °ल्येव ($S'_4$ °ल्य च); $S'_3$ °ल्यैश्च (emended as in text with D B). —d) $S'_3$ °भूषितां.

873 $S'_1$ missing (cf. v. l. 836). —b) D B प्रसिद्ध-. —d) $S'_{2\cdot3}$ सिद्ध-.

874 $S'_1$ missing (cf. v. l. 836). —b) D मार्तांडा°. —c) K om. hapl. -धान्यौ व्य°. —d) D -नभःस्थले.

875 $S'_1$ missing (cf. v. l. 836). —a) D B $S'_6$ (after corr.) स्वय-. —b) $S'_4$ K C अष्क (mislec. for S'ār. ङ्कु)रितं; $S'_3$ (evid. emend.) आविष्कृतं.

प्रजानामल्पपुण्यत्वान्नावर्धत मनागपि ।
तपोबलात् पल्लवितं पुष्पितं फलितं तथा ॥ ८७६ ॥

श्रीजैनोल्लाभदीनेन युगपत् तद्व्यधीयत ।
तपसामतिशुद्धानां किमिव ज्ञापकं परम् ॥ ८७७ ॥

पूर्वपुण्यक्षये राज्यात् पतन्त्यन्ये महीक्षितः ।
तस्य जन्मान्तरे राज्यप्राप्त्यै राज्यमभूत् प्रभोः ॥ ८७८ ॥

स नदीमातृकाः कृत्वा धरणीर्देवमातृकाः ।
अग्रहाराननु क्ष्मापो द्विजेभ्यो यददात्सदा ॥ ८७९ ॥

वारहक्षेत्रनगरविजयेशानकादिषु ।
यवनेभ्योऽग्रहारान् स सविहारान् स्वयं ददौ ॥ ८८० ॥

विजयक्षेत्रवाराहक्षेत्रशूरपुरादिषु ।
सत्रदानेन स त्रासमपि गोत्रभिदो व्यधात् ॥ ८८१ ॥

भूमिविक्रयभूर्जादि कृतचिह्नं महीभुजा ।
निह्नवप्रागभावाय धर्माधिकरणं कृतम् ॥ ८८२ ॥

यो जयापीडदेवेन प्राप्तो नागप्रसादतः ।
स दण्डमिव तस्यादात्ताम्रं ताम्रकरो गिरिः ॥ ८८३ ॥

मणीन् खनिभ्यश्चालभ्यांस्तद्राज्ये भूरजीजनत् ।
ये जैनमणयः ख्याताः पद्मरागमदच्छिदः ॥ ८८४ ॥

---

877 $S'_1$ missing (cf. v. l. 836). —a) D °देनेन. —c) $S'_{2-4\cdot6}$ K C °शुद्धत्वात् (emended as in text with D B. Thus marg. in $S'_6$).

878 $S'_1$ missing (cf. v. l. 836). —b) D B $S'_6$ marg. महीभुजः. —c) D reads after तस्य one extra word : जन्मांतस्य.

879 $S'_1$ missing (cf. v. l. 836). —c) D B ननु (for अनु).

880 $S'_1$ missing (cf. v. l. 836). —b) D B $S'_6$ (after corr.) °शपुरा° (for °शानका°). —$S'_{2-4\cdot6}$ K C om. hapl. 880[cd] and 881[ab].

882 $S'_1$ missing (cf. v. l. 836). —d) D B $S'_6$ (after corr.) °कारिणा (for °करणं).

883 $S'_1$ missing (cf. v. l. 836). —d) $S'_{2\cdot6}$ D B ताम्राकरो.

सरितां सैकते पीतसिकताभ्रमदं तदा।
काञ्चनं काञ्चन च्छायां विभ्रल्लोकैरचीयत ॥ ८८५ ॥

सरित्सुवर्णात् षष्ठांशो ग्राह्यो भाविभिरीश्वरैः।
ताम्रपट्टेऽलिखद्याच्ञावाक्यमेवं नरेश्वरः ॥ ८८६ ॥

नगराधिकृतः काचडामरो दुस्तरे पथि।
क्रोशमात्रं व्यधात् सेतुं नगरान्तः शिलामयम् ॥ ८८७ ॥

नात्मैव सेतुदानेन तेन पङ्कात्समुद्धृतः।
सकलोऽपि जनो मध्येनगरं पुण्यशालिना ॥ ८८८ ॥

विषये विषये चक्रे शिर्यभट्टो मटान् पृथून्।
अन्येऽपि सचिवा राज्ञो धर्मशाला बहूर्व्यधुः ॥ ८८९ ॥

पद्माकरस्य मथनाय गजाधिराजा-
वभ्युद्यतौ सततमेव तदम्बुतृप्तौ।
तावत्कराकरि रदारदि चातिमत्तौ
कृत्वा क्षणादगमतां स्वयमेव नाशम् ॥ ८९० ॥

---

885 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4}$ K C नीत–; D B पीत- (as in text). —b) D B $S'_6$ (after corr.) °मयं (for -मदं); $S'_{2\cdot4}$ °मदत्त (mislec for S'ār. न्त)दा ($S'_2$ या) (sic).

886 $S'_1$ missing (cf. v. l. 836). —c) $S'_4$ या च (for याच्ञा-); $S'_3$ याच्ञां. —d) $S'_{2-4}$ K C -वाध्य (or च्य)म् (emended as in text with D B $S'_6$); $S'_3$ (before corr.) नरेश्वरैः.

887 $S'_1$ missing (cf. v. l. 836). —b) $S'_4$ K C -डामरे; $S'_6$ दुस्तरः (marg °रे).

888 $S'_1$ missing (cf. v. l. 836). —a) $S'_4$ वा (mislec. for S'ār. ना)त्मैव.

889 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2-4\cdot6}$ K C शिव- (mislec. for S'ār. र्य); $S'_{2-4\cdot6}$ K C B मठान् (emended as in text with D); $S'_2$ पृपू (mislec. for S'ār. थू)न्; B (erroneously) $S'_6$ marg. पृथक् (for पृथून्). —d) $S'_4$ बहर्व्य° (sic).

890 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2-4}$ K C -द्द (mislec. for S'ār. तृ)प्तौ. —c) $S'_{2\cdot3\cdot4\cdot6}$ K C रसादिह; D B $S'_6$ marg. रदारदि (as in text); D °मत्तां (for °मत्तौ).

मसोदशूरौ धात्रेयौ भूपतेरेकगोत्रजौ ।
द्वौ रन्ध्रान्वेषिणावास्तामन्योन्यविभवासहौ ॥ ८९१ ॥

राज्ञा तौ वारितक्रोधौ स्नेहदाक्षिण्यशालिना ।
हत्वान्यतरमुत्पिञ्जसज्जावभवतां चिरम् ॥ ८९२ ॥

कदाचिद् भूपतेरग्रे स्पृष्टः शूरेण वाक्शरैः ।
मसोदठक्कुरः शस्त्रसन्न्यासं समकल्पयत् ॥ ८९३ ॥

न्यस्तशस्त्रः स रजनौ गच्छन्मितपरिच्छदः ।
रन्ध्रं लब्ध्वाऽथ शूरेण मसोदष्ठक्कुरो हतः ॥ ८९४ ॥

विन्नाद्यैष्ठक्कुरैस्तस्य भ्रातृभिः ख्यातपौरुषैः ।
हन्तुमभ्यर्थितः शूरो भूपतेः प्रेमशालिनः ॥ ८९५ ॥

शूरे सानुचरे विन्नठक्कुरेण हते सति ।
प्रसादमगमत्कीर्तिष्ठक्कुराणां च धीस्तदा ॥ ८९६ ॥

तथा स योगिनां मानमदाद् भूलोकवासवः ।
तेषामग्रे यथा मद्रराजाद्यैर्लेडितं श्ववत् ॥ ८९७ ॥

---

891 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2\cdot4\cdot6}$ (before corr.) K C सयोध- (emended to मसोद- as in text with $S'_3$ D); B (evid. emend.) $S'_6$ (after corr.) मसूद- .

892 $S'_1$ missing (cf. v. l. 836) —a) D B $S'_6$ marg. °तोद्रेकौ (for °तक्रोधौ). —b) $S'_{3\cdot4}$ K C (gram. assim.) -शालिनौ. —c) B (evid. emend.) हत्वा° (for हत्वा°,; D B $S'_6$ (*sup. lin*) °तमम् .

893 $S'_1$ missing (cf. v. l. 836). —a) $S'_4$ भूपरग्रे च (sic). —b) $S'_{4\cdot6}$ K C पृष्टः ; $S'_{2\cdot3}$ वाक्छरः (sic). —c) B (evid. emend.) $S'_6$ मसूद-; $S'_4$ -टकुरः . —d) $S'_{2-4\cdot6}$ K C °काल ($S'_{2\cdot6}$ र)यत् ; D B समकल्पयत् as in text).

894 $S'_1$ missing (cf. v. l. 836). —c) $S'_4$ K लब्धाथ. —d) $S'_{2\cdot4\cdot6}$ (before corr.) K C मसोदः ठ°; D B $S'_6$ (after corr.) मसो (B $S'_6$ सू )दठ°.

895 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4}$ द्विन्ना ($S'_2$ न्रा); $RSs_2$ विंना°; B (erroneously) $S'_6$ marg. वित्ताढैप् (for विन्नाद्यैप् ).

896 $S'_1$ missing (cf. v. l. 836). —a) B (erroneously) $S'_6$ marg. वित्त– (for विन्न–).

897 $S'_1$ missing (cf. v l. 836). —a) B $S'_6$ (after corr.) तथाप्त (mislec. for Dev. स). —b) $S'_{2-4}$ K C मानमभूद्; D B $S'_6$ (after corr.) मानमदाद् (as in text); $S'_6$ marg. (मा)नं ददौ.

स दद्योगिनां भोगं योगं तेभ्योऽग्रहीन्नृपः ।<br>
भयं ददद्रातिभ्यो दधावभयमप्यहो ॥ ८९८ ॥

मुद्राकर्परकन्थादि वारयन् योगिनां नृपः ।<br>
कुण्डलं हेमपात्राणि दुकूलमपि दत्तवान् ॥ ८९९ ॥

छित्त्वा पर्वतपक्षतीरपि नवाः फेणेन हत्वाप्यहिं<br>
कृत्वा यज्ञशतं त्रिलोकविजयी कीर्त्या न तृप्तिं गतः ।<br>
इन्द्रः पीतसितासितारुणहरिद्वर्णं विधत्ते धनु-<br>
र्ज्योतिर्धूमसमीरनीरघटनामात्रेऽप्यसारे घने ॥ ९०० ॥

भूतानां भाविनां वाऽपि यदशक्यं महीभुजाम् ।<br>
तद्दिष्टसाहसो राजा कीर्तये कर्तुमिष्टवान् ॥ ९०१ ॥

कर्तव्यं साहसं यद्यदचिन्तयदयं नृपः ।<br>
कालस्याऽनवधित्वेन विपुलत्वेन च क्षितेः ॥ ९०२ ॥

तत्तत्सम्भाव्य साध्यं स भाविभिर्मेदिनीश्वरैः ।<br>
दूरादब्धिरिवाऽऽयातो रत्नेष्वधिकदीप्तिषु ॥ ९०३ ॥

---

898 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4\cdot 6}$ (before corr.) K C स दस (mislec. for Śār. द)द्. —b) $S'_{2\cdot 4\cdot 6}$ K C यागं. —$S'_{2-4\cdot 6}$ K C om. hapl. 898cd and 899ab.

899 $S'_1$ missing (cf. v. l. 836). —a) D B -कर्पूर- (emended as in text). —d) $S'_{2\cdot 3}$ K (after corr.) D दुगू ($S'_2$ क्कू)लम्.

900 $S'_1$ missing (cf. v. l. 836). —a) $S'_2$ पक्षतिर्; $S'_2$ D B फेनेन; M (evid. emend.) वज्रेण (for फेणेन). —c) $S'_3$ °द्वर्णा; $S'_{3\cdot 4\cdot 6}$ (before corr.) K C तनु ($S'_3$ नुं) (emended to धनुर् as in text with D B); $S'_2$ त···ज्यो° (blank with dots).

901 $S'_1$ missing (cf. v. l. 836). —a) $S'_3$ च (for वा). —b) $S'_2$ यदा°; $S'_3$ यद्य° (for यद°). —c) $S'_{3\cdot 4\cdot 6}$ K C -साहसी (emended as in text with $S'_2$ D B).

902 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2-4\cdot 6}$ (before corr.) K C उचितं यद् (emended to अचिन्तयद् as in text with D B). —c) $S'_{2-4\cdot 6}$ (before corr.) K C अनवधित्वाच्च; K °धित्वाञ्च; D B °धित्वेन (as in text).

903 $S'_1$ missing (cf. v. l. 836). —a) D वा (for स). —c) D B $S'_6$ (after corr.) अब्धिम्.

साहसेष्वेकमादातुमपि प्राप न निश्चयम् ।
उपचारैर्दरिद्राणां संभवोदारमानसः ॥ ९०४ ॥

न तोषितः श्रुतै राज्ञामतीतानां स साहसैः ।
अगम्येष्वपि भूपालः शैलेषु च सरःसु च ॥ ९०५ ॥

शब्देष्वर्थेष्विव कविस्ततः समचरन्नृपः ।
वणिजामिव वाक्यानि व्यवहारसमुत्सुकः ॥ ९०६ ॥

राजा नीलपुराणादीन् पण्डितेभ्यस्ततोऽशृणोत् ।
चिन्तान्तराणि संत्यज्य साहसैकसमुत्सुकः ॥ ९०७ ॥

कदाचिद् धरणीपालश्चिरमेवमचिन्तयत् ।
देहस्येव त्रिलोकस्य मुखवत् क्षितिमण्डलम् ॥ ९०८ ॥

प्रधानं तत्र कश्मीरमण्डलं नयनं यथा ।
शैलराजशिखाः पक्ष्मतुलां यत्र वहन्ति ताः ॥ ९०९ ॥

तारामण्डलवत्तत्र महापद्मसरोवरः ।
महापद्मास्पदं तत्र ज्योतिर्मण्डलसोदरम् ॥ ९१० ॥

---

904 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2\cdot3}$ तच्च ($S'_3$ चिछ्र)यम्. —c) M (evid. emend.) उपचारे (for °रैः). —d) D B बभूवो° (for संभवो°).

905 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2-4}$ K C च साहसे (emended as in text with D B $S'_6$).

906 $S'_1$ missing (cf. v. l. 836).

908 $S'_1$ missing (cf. v. l. 836). —c) D वाक्याणि (sic).

908 $S'_1$ missing (cf. v. l. 836). —c) $S'_{2\,3\cdot4}$ देव($S'_3$ *sup. lin. pr. m.* ह)स्य.

909 $S'_1$ missing (cf. v. l. 836). —a) K काश्मीर–. —c) $S'_2$ चै (mislec. for S'ār. शै)ल–. —d) $S'_2$ तत्र (for यत्र).

910 $S'_1$ missing (cf. v. l. 836). —b) $S'_2$ -पद्मः. —After 910[ab] D B $S'_6$ marg. ins. :

119* (B 1194[cd]) शश्वदुद्भ्रमितो यत्र मैनाकान्वेषणोद्यतः ।
(B 1195) प्रतिबिम्बफलाद्भाति जाने हिमगिरीश्वरः ।
समुद्रसदृशे यत्र प्रतिबिम्बच्छलाद्रवेः ।
(B 1196[ab]) अन्तः कृतास्पदो दीप्तो लक्ष्यते वडवानलः ।

—cd) $S'_{2-4\cdot6}$ K C त ($S'_{2\cdot4\cdot6}$ तत्र)···म° (blank filled as in text with B. Thus in $S'_6$); D ज्योतिम°; —cd) M (evid..emend.) सर्वजनतानन्ददायकः (for तत्र ज्योतिर्मण्डलसोदरम् ).

तदापूर्य कथञ्चिच्चेत्कियन्मात्रमपि क्रमात् ।
निर्माणं शक्यते कर्तुं तदा राज्यफलोदयः ॥ ९११ ॥

अगाधसलिलच्छन्नक्रोशाष्टाविंशतिप्रमः ।
सरोराजः स हि महानाशयो महतामपि ॥ ९१२ ॥

विचिन्त्येति स विस्रष्टुं तत्रोपायं सरोवरे ।
नावास्य गतवान्मध्यं योगीवाऽऽत्मानमात्मना ॥ ९१३ ॥

सदैवोद्धतकल्लोलं महापद्मसरो महत् ।
नाऽगाहन्त नृपाः पूर्वं तरणीभङ्गशङ्किनः ॥ ९१४ ॥

तपः प्रभावाद्धैर्याद्वा कार्यगौरवतोऽपि वा ।
स्थलवत्सलिले तत्र स राजा त्वचरत्सुखम् ॥ ९१५ ॥

यच्चेतसा चिरतरं परिचिन्त्यमानं
चिन्तामणिः किल ददाति तदेव नान्यत् ।
चित्तस्य चाऽपि यदगोचरतामुपैति
तत्तु प्रयच्छतितरां वत बुद्धिरत्नम् ॥ ९१६ ॥

तस्य हि क्षितिपालस्य निरालस्यमतेः सतः ।
सरसः स्थलतां कर्तुमुपायः प्रत्यभादयम् ॥ ९१७ ॥

---

911 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2-4\cdot6}$ K C कि···क्र (blank filled as in text with D B. Thus in $S'_6$) —d) $S'_{2-4\cdot6}$ K C राज्य [$S'_{2-4}$ °ज्यः]··· (blank filled with D B. Thus in $S'_6$).

912 $S'_1$ missing (cf. v. l. 836). —a) M (evid. emend.) °च्छन्नः. —b) $S'_2$ -क्रोसा°; D B $S'_6$ °तिर्भवन् (for °तिप्रमः). —bc) $S'_4$ K C ···सरोराजा (K C °जः).

913 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4\cdot6}$ K C ···स वि° (blank filled as in text with D B. Thus in $S'_6$); $S'_4$ विस्रष्टं (sic). —c) D B $S'_6$ (after corr.) नागस्य.

914 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2\cdot4}$ K C -कल्लोल-.

915 $S'_1$ missing (cf. v. l. 836). —d) $S'_{2-4\cdot6}$ K C न्वस (mislec. for S'ār. त्वच)रत्.

916 $S'_1$ missing (cf. v. l. 836). —c) $RSs_2$ तदा° (for यद°). —d) $RSs_2$ तश्चा (for S'ār. च्चा)शु (for तत्तु प्र°).

917 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2-4\cdot6}$ K C °लम्ब) mislec. for S'ār. स्थ-).

शिलापूर्णप्रवहणैरुपर्युपरि पातितैः ।
शैलशृङ्गैरिवाम्भोधिमेतदापूरयाम्यहम् ॥ ९१८ ॥

कृताभिर्लोहनद्धाभिः पट्टीभिर्देवदारुणः ।
न क्लिद्यन्ते न भिद्यन्ते शिलाप्रवहणानि यत् ॥ ९१९ ॥

ततः प्रत्यागतो राजा वृद्धानाबद्धकौतुकः ।
अभ्यगाच्छरणं तत्र ते चैनं नृपमभ्यधुः ॥ ९२० ॥

द्वारिकेव शुभा तस्य पुरी सन्धिमती किल ।
सुदर्शनेन चक्रेण मनुजानां समाश्रिता ॥ ९२१ ॥

नगर्या देवता तस्या महापद्मः फणीश्वरः ।
त्वमिवैतांश्चतुर्वर्णान् पुत्रवत् पर्यपालयत् ॥ ९२२ ॥

कलिकालबलात्तत्र दुराचारनिषेविणः ।
जनास्तद्देशवास्तव्याः प्रापुर्वृद्धिं दिनाद्दिनम् ॥ ९२३ ॥

---

919 $S'_1$ missing (cf. v. l. 836). —a) M (evid. emend.) कृतानि (for °भिर्). —c) $S'_2$ न्ते तत···शि°; $S'_4$ °न्ते न···शि°; $S'_3$ ततस्तोये (for न भिद्यन्ते). —d) $S'_{2-4\cdot6}$ K C -प्रप्रवहणादिभिः (emended as in text with D B. Thus after corr. in $S'_6$).

920 $S'_1$ missing (cf. v. l. 836). —b) $S'_4$ -कौतुकम्. —cd) D B $S'_6$ marg. अपृच्छत्कारणं तस्य ते चैनं नृपमब्रुवन्. —d) $S'_{2-4\cdot6}$ K C अभ्ययुः (mislec. for Śār. धुः).

921 $S'_1$ missing (cf. v. l. 836). —a) D B $S'_6$ marg. [अ]र्णवेत्रासीत् (for शुभा तस्य). —b) $S'_4$ पुरा (for पुरी). —c) D B $S'_6$ marg. सहिता (for चक्रेण). —d) D B $S'_6$ marg. सततं श्रीपति- (for मनुजानां समा°).

922 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2\cdot4\cdot6}$ (before corr.) K C तस्य (emended as in text with $S'_3$ D B). —b) $S'_{2\cdot4\cdot6}$ K C -पद्म···(blank filled as in text with D B); $S'_3$ स नागराट् (for फणीश्वरः). —c) $S'_{2\cdot4\cdot6}$ K C °मिवै° (blank filled as in text with D B); $S'_3$ पितेवै° (for त्वमिवै°); $S'_2$ चतु···र्व° (sic).

923 $S'_1$ missing (cf. v. l. 836). —b) M (evid. emend.) निषेविनः. —c) C (blank with dots)···जनास्; D B $S'_6$ marg. वसन्तस्तत° ([$S'_6$ °त्र] for जनास्तद्देश°).

अथ वर्णाश्रमाचारविपर्यासानुबन्धतः ।
क्रोधं नागपतिर्यातो दूषणादिव सज्जनः ॥ ९२४ ॥

अनुज्झितनिजाचारं कुम्भकारं स कञ्चन ।
स्वप्नेऽवदद् दुराचारान् पौरान् मज्जयितास्म्यहम् ॥ ९२५ ॥

नागः प्रजादुराचारात् प्रजा ब्रोडयतीति तम् ।
प्रातर्वदन्तमहसन् पौरा मत्तमिवाखिलाः ॥ ९२६ ॥

फणाशतोल्लसद्वारिधाराशब्दभयङ्करः ।
नागराजोऽथ नगरीं वैरीवावेष्टयज्जलैः ॥ ९२७ ॥

---

924 $S'_1$ missing (cf. v. l. 836). —$S'_2$ om. 924ab. —a) $S'_{3.4.6}$ K C कर्मानुसारेण; D B $S'_6$ marg. वर्णाश्रमाचार- (as in text).

925 $S'_1$ missing (cf. v. l. 836). —c) $S'_{2.4.6}$ (before corr.) K C [अ]वदन्दु (mislec. for S'ār. दद्दु)रा°; $S'_2$ °चाराः. —d) $S'_{2.4}$ पौराः पशुमिवा($S'_2$ वाः)खिलाः; $S'_3$ संब्र (sic) डयाम्य° (for मज्जयितास्म्य°).

926 $S'_1$ missing (cf. v. l. 836). —a) D B °चार-. —b) D B $S'_6$ marg. क्रुद्धो (for प्रजा); $S'_{2-4.6}$ (before corr.) K C ब्र($S'_2$ K ब्रु)ड° (emended as in text with D B). —c) D B $S'_6$ marg. जहसुः (for अहसन् ). —d) K (before corr.) पौराः; $S'_{2-4.6}$ K C पशुम् ; D B $S'_6$ (after corr.) मत्तम् (as in text).

—After 926 D B $S'_6$ marg. ins. :

120* (B 1213) तदास्तिके कुम्भकारे गते तस्मात्पुराद् द्रुतम् ।
नागेन्द्रो जलपूरेण सर्वमब्रोडयत्पुरम् ।

(B 1214) यावत्पौराः पुराच्चेलुस्ते सर्वे हरिणा इव ।
तावदेवाग्रमाक्रामद्दावाग्निरिव तज्जलम् ।

[(l. 3) D (orig.) पुराश्चे° (⌊mislec. for S'ār. चे⌋ after corr. पुरा चे°); B (evid. emend.) पुरश्चे°. —(l. 4) D हरिण इ° (emended as above with B)].

927 $S'_1$ missing (cf. v. l. 836). —a) $S'_4$ C -शेतो°.

मन्त्रान् पठत्सु विप्रेषु जनेषु प्रणमत्स्वथ ।
रुदत्स्वपि च बालेषु नाऽस्याभूद्यमवद्दरः ॥ ९२८ ॥

भयाद्बालेषु पुत्रेषु कण्ठलग्नेषु योषितः ।
बाष्पमुक्ताफलैश्चक्रुः पूजां फणिपतेरिव ॥ ९२९ ॥

पादादङ्कं ततः कण्ठं ततः स्कन्धं ततः शिरः ।
प्राणा इव सुता जग्मुर्मातॄणां भयविह्वलाः ॥ ९३० ॥

सर्वाण्यङ्गानि नारीणां शृङ्गारीवानुरागवान् ।
कम्पमानानि लोलः स जलपूरः समस्पृशत् ॥ ९३१ ॥

ह्रस्वं दीर्घं च सूक्ष्मं च स्थूलं चाणु महत्तथा ।
अन्धकार इवाऽऽच्छाद्य जलपूरो व्यजृम्भत ॥ ९३२ ॥

अगाधे सलिले तस्मिन् खलस्पर्शासहस्ततः ।
फणिराजः स्थितिं चक्रे विपिने सज्जनो यथा ॥ ९३३ ॥

कालियः स हि नागेन्द्रः पदाक्रान्तो मुरद्विषा ।
शिरस्युत्पन्नपद्मत्वान्महापद्माभिधां गतः ॥ ९३४ ॥

नष्टान् योजयितुं भूयः कश्मीरानिच्छतो हरेः ।
अवतारस्त्वमेतत्ते सिध्यत्येव चिकीर्षितम् ॥ ९३५ ॥

---

928 $S'_1$ missing (cf. v. l. 836). —[a]) $S'_4$ K C वप्रपु (emended as in text with $S'_{2\cdot3\cdot6}$ D B). —[b]) $S'_{2-4\cdot6}$ (before corr.) K C नागे (mislec. for S'ār. जने)षु; D B $S'_6$ marg. °त्सु च (for °त्स्वथ); $S'_{2-4}$ words begining with प्रणम° in 928[b] and ending with -लग्नेषु in 929[b] om. hapl. In $S'_3$ om. words marg. *sec. m.* with the remark श्लोकः एकः पतितः. —[c]) D बाल्येषु. —[d]) $S'_3$ (marg. *sec. m.*) K C [आ] स्थाभूद्; D B $S'_6$ marg. दया; $S'_3$ (marg. *sec. m.*) पुरः (for दरः).

929 $S'_1$ missing (cf. v. l. 836). —[b]) $S'_3$ (hypermetric) पौरयोषितः (for योषितः).

930 $S'_1$ missing (cf. v. l. 836). —[b]) $S'_3$ स्कन्दं. —[d]) $S'_2$ मात्तॄणां (sic).

933 $S'_1$ missing (cf. v. l. 836). —[b]) $S'_2$ तथा (for ततः). —[c]) $S'_2$ स्थितं.

934 $S'_1$ missing (cf. v. l. 836). —[c]) $S'_{2-4\cdot6}$ (before corr.) K C पाद (mislec. for S'ār. पद्म) त्वान्. —[d]) $S'_4$ K C गताः (sic).

राजा श्रुत्वेति तत्त्वज्ञः क्षणमेवमचिन्तयत् ।
एवंविधानि कार्याणि सिध्येयुः कथमन्यथा ॥ ९३६ ॥

प्रजाचारविपर्यासान्नाक्षमिष्ट पुरं फणी ।
नानिष्टं सहतेऽल्पोऽपि तादृशस्तु महान् कथम् ॥ ९३७ ॥

नागराजोचितच्छत्रसगोत्रमहमत्र तु ।
स्थलमात्रं यशोरत्नघटिकारम्यमारभे ॥ ९३८ ॥

उल्लोलसरसो मध्ये वर्तमाने महास्थले ।
पवित्रे विजने चाऽत्र सिद्धिं यास्यन्ति साधकाः ॥ ९३९ ॥

चिन्तयित्वेति भूपालः शिलाप्रवहणैर्दृढैः ।
उल्लोलसरसो मध्यमप्यगाधमपूरयत् ॥ ९४० ॥

सरसस्तु ततस्तस्य स्थलीभूतेऽथ भूपतिः ।
मध्यदेशे महाराजो जैनलङ्कां विनिर्ममे ॥ ९४१ ॥

अन्ते तस्यैव सरसो राक्षसेन्द्रप्रसादतः ।
जयापीडमहीपालः स्थलभावमदापयत् ॥ ९४२ ॥

---

936 $S'_1$ missing (cf. v. l. 836). —a) $S_{2-4 \cdot 6}$ K C स स्वप्ने; D B तत्त्वज्ञः (as in text).

937 $S'_1$ missing (cf. v. l. 836). —c) B (evid. emend.) $S'_6$ marg. क्षमते (for सहते).

938 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2 \cdot 3}$ °तं छत्र-; $S'_4$ C तच्छ (C च्छ)त्र-. —c) $S'_{2-4 \cdot 6}$ K C स्थलम···शो° (blank filled as in text with D B. Thus in $S'_6$). —d) $S'_{2 \cdot 6}$ (before corr.) C -रम्यभा (sic) रभे.

939 $S'_1$ missing (cf. v. l. 836). —a) $S'_4$ उल्लील-; $S'_6$ उल्लोर- (marg. °ल-). —b) K वर्जमान; D B $S'_6$ marg. कल्पमाने; M (evid. emend.) कल्प्यमाने (for वर्त°); D B $S'_6$ marg. स्थले तथा (for महास्थले).

940 $S'_1$ missing (cf. v. l. 836). —c) $S'_6$ उल्लोर- (marg. °ल-). —d) K अथ (for अप्य°).

941 $S'_1$ missing (cf. v. l. 836), D B om. hapl. 941 and 942. —a) $S'_{2 \cdot 4 \cdot 6}$ K C सरःस···सुतस् (emended and blank filled as in text with $S'_3$). —b) $S'_4$ °भूतेय (sic); $S'_2$ K °भूतेषु. —cd) $S'_4$ C °राज···नलङ्कां; K °राज···जैन- (blank filled as in text with $S'_{2 \cdot 3 \cdot 6}$).

942 $S'_1$ missing (cf. v. l. 836). —c) $S'_4$ (hypermetric) श्रीजयापीड- (for जयापीड-).

हेमन्ते विसश्टङ्गाटकिवुकोद्धरणादिना ।
श्रीजयापीडकोट्टस्य ज्ञायतेऽगाधवर्तिता ॥ ९४३ ॥

उल्लोलस्यान्तभागेषु सुय्यकुण्डलकादयः ।
दृश्यन्ते बहवो ग्रामा विशालसदनाङ्किताः ॥ ९४४ ॥

गिरयोऽपि निमज्जन्ति यत्र तत्र तु स व्यधात् ।
जैनलङ्कां महाटङ्कां तं निधायाऽधिकारिणम् ॥ ९४५ ॥

---

943 $S'_1$ missing (cf. v. l. 836). —a) $S'_4$ विश- (for बिस-). —b) $S'_{2-4\cdot6}$ (before corr.) C -कवु ($S'_3$ बु)को° (emended as in text with K D); B $S'_6$ marg. किपु (mislec. for Dev. वु)को°. —c) $S'_{3\cdot4}$ C कोटस्य (emended as in text with $S'_{2\cdot6}$ K D B).

944 $S'_1$ missing (cf. v. l. 836). —a) $S'_6$ उल्लोर- (marg. °ल-); M (evid. emend.) [अ]न्तर्°. —b) D स्व (mislec. for S' ār. सु)य्य-; B स्व(या- mislec. for Dev. य्य); $S'_6$ (orig.) सुय्ये- (after corr. स्वया-); $RSs_2$ सय्य-.

945 $S'_1$ missing (cf. v. l. 836). —cd) $S'_2$ जैन···कामकां महालङ्कां ता नि° (sic). —c) $S'_4$ K C जैन···कां; $S'_{3\cdot6}$ K (after corr.) D B जैनलङ्कां (as in text). —d) M (erroneously) सं° (for तं).

—After 945 D B $S'_6$ (on separate folio) ins.:

121* (B 1232) कारुण्यात्कीर्तिलोभाच्च स्वयमेवाथ भूपतिः ।
वामपार्श्वे गिरौ वारि विस्रष्टुं चिरमभ्रमत् ।
(B 1233) दृष्ट्वा निःसलिलं शैलं लेदर्यानयनोत्सुकः ।
अश्रौषीच्छात्रवृद्धेभ्यस्तन्मूलममरेश्वरम् ।
(B 1234) निर्विघ्नं कार्यसिद्ध्यर्थं प्रसादयितुमीश्वरम् । [5]
आरुरोहामरेशाद्रिमभिमानमिवाथ सः ।
(B 1235) ते लूताभ्य इव म्लेच्छा नागेभ्यः शङ्कयाकुलाः ।
नान्योऽन्यमपि संलापं तत्र मूका इव व्यधुः ।
(B 1236) त्वग्योगिनामिव स्वस्थास्तुरुष्काणां वनस्थिताः ।
नागा दर्शनमप्यन्तर्नासहन्त कदाचन । [10]
(B 1237) धैर्येणोपद्रुतो राजा शुश्रुवान्नासहिष्ट तान् ।
बालोऽग्निकणविप्लुष्टः पद्मरागमिवामलम् ।

(B 1238) कपीनामिव बद्धानां भीतानामपि च ध्रुवम् ।
म्लेच्छानां च दुराचारचापल्यं विन्यवर्तत ।

(B 1239) यदुद्गर्जद्भिरुद्यद्भिः सविद्युद्भिर्घनैर्घनैः । [15]
कोपेनेवाऽभवत्तेषु ततः कालमुखं नभः ।

(B 1240) कातरेष्विव सङ्ग्रामाद्गिरेस्तूर्णपलायिषु ।
म्लेच्छेषु करकावर्षैर्नष्टधैर्येषु तत्क्षणम् ।

(B 1241) मानादिव कुलीनोऽथ भक्त्या धैर्यादविच्युतः ।
अवरूढो न शैलेन्द्रात्कश्मीरेन्द्रः कथञ्चन । [20]

(B 1242) मान्त्रिकेष्विव मेघेषु गर्जत्सु यवनोरुगैः ।
त्यक्तो निधिरिव क्ष्मापो देवो नागैरशंस्यत ।

(B 1243) निवर्त्यतामितो देव कार्यसिद्धिर्भविष्यति ।
पूजोपकरणं शम्भोः प्राप्तमेव विसृज्यताम् ।

(B 1244) स्वप्ने दिव्याकृतेः पुंसः श्रुत्वेति क्षितिनायकः । [25]
सिद्धकार्यस्ततः प्रातः कश्मीरान्तरमाविशत् ।

(B 1245) लेदरी गिरिमार्गेण प्राप्या मार्ताण्डपत्तनम् ।
इति राजा समादिक्षद्धार्मिकं शिर्यभट्टकम् ।

(B 1246) दयालुत्वात् प्रशस्तत्वान्निर्लोभत्वान्महीभुजा ।
नियुक्तः स नदीकुष्टावलगद्भट्टशिर्यकः । [30]

(B 1247) सोऽव्याहताज्ञः सर्वत्र लोकालीपतिभिस्ततः ।
लोकमानाय्य शैलेन्द्रं सरितः पदवीं व्यधात् ।

(B 1248) अवटेषु शिलाबन्धं निम्नेषु ग्रावपूरणम् ।
खनीषु कुटिलं मार्गं तस्याः स सरितो व्यधात् ।

(B 1249) तटस्थान्पोषयन्त्युच्चैः पुरस्ताच्छाखिनः सरित् । [ 35 ]
सा तु राजसभेवाऽथ रभसादुदमूलयत् ।

(B 1250) प्रज्ञेव विदुषः स्थित्वा चिरं प्रतिपदं सरित् ।
लोलीकृततरङ्गभ्रूः प्रातिष्ठत शनैः शनैः ।

(B 1251) राज्ञस्तपःप्रभावेण भट्टशिर्यनयेन च ।
प्रजानामपि भाग्येन नाऽस्या विघ्नोऽभवत्क्वचित् । [ 40 ]

(B 1252) सा भजन्तीं गिरिं काऽपि त्यजन्ती दूरतः क्वचित् ।
वप्रात्परतेवाऽभूत् सशब्दकलहा सरित् ।
(B 1253) नवस्य भूमिपालस्य चित्तवृत्तिरिवाऽम्भसा ।
अवटो दक्षिणे नद्या वामेऽद्रिर्विकटोपलः ।
पुरस्तुङ्गा च दीर्घा च शिलेति काऽप्यदृश्यत । [ 45 ]
(B 1254) स्थूलेन गण्डशैलेन पुरतो रुद्धपद्धतिः ।
न तस्थौ न ययौ कुल्या कामिनीव विमानिता ।
(B 1255) राज्ञा स्वयमथाप्यत्र गण्डशैले विदारिते ।
सरित्तीर्णप्रतिज्ञेन गच्छन्ती क्रमते स सा ।
(B 1256) नद्या व्याक्रष्टुमिष्टायाः शिलया मार्गरोधने । [ 50 ]
मिहिराख्यो नृपः क्रोधात्स्त्रीलक्षाणि जघान सः ।
(B 1257) श्रीजैनोल्लाभदीनस्तु सरितो मार्गरोधिनीम् ।
दारयित्वा शिलां शस्त्रैर्जनताः समजीवयत् ।
(B 1258) गिरीशमुकुटभ्रष्टां गङ्गामिव भगीरथः ।
लेदरीमब्धिविस्तीर्णां मार्ताण्डक्ष्मामवापयत् । [ 55 ]
(B 1259) मेखलेव गिरेस्तस्य राज्ञः कीर्तिरिवाऽमला ।
भूमेर्मुक्तालतेवाऽसौ सरित्परमशोभत ।
(B 1260) समीपस्थोऽपि मार्ताण्डो न मां शोषयितुं क्षमः ।
इतीव तरलोद्दामा निनादमकरोत्सरित् ।
(B 1261) एकः श्रीजयनोल्लाभदेनो धर्मपरो नृपः । [ 60 ]
सरित्प्रवाहकपटादिति रेखां विधिर्व्यधात् ।
(B 1262) ब्रह्मचर्योपतप्तानां स्त्रीसङ्गादिव भूरुहाम् ।
सेकात्सरित्कृतात्तत्र किमप्युद्भवत्सुखम् ।
(B 1263) दर्शितावर्तनाभिः सा गच्छन्ती सुभगं शनैः ।
सरित्सा फेनसहिता मार्ताण्डमहसत्तराम् । [ 65 ]
(B 1264) सूर्यो हारिप्रवाहायां सरिति प्रतिबिम्बितः ।
मूर्तः सन्निहितो ज्ञातः कलावपि चिरं जनैः ।
(B 1265) ननु दीनान्पालयन्ती नदानाभिमुखी सती ।
सरित्प्रसिद्धिमगमज्जैनधर्मनदीति सा ।

(B 1266) सान्द्रं प्रदोषजनितं तिमिरं निवार्य [ 70 ]
विश्वप्रकाशनपरस्य दिवाकरस्य ।
आयाति मण्डलतलं स्वयमेव तेजः
श्रेष्ठौषधीशऋणमास्ततरां चिरं यत् ।

(B 1267) त्रिपञ्चाङ्कमिते वर्षवृन्दे याते कलेः किल ।
अथर्वकौशलाद् द्रोणो रणं कुरुबलैर्व्यधात् । [ 75 ]

(B 1268) कुरुभिर्निहते द्रोणे तदाथर्वा निराश्रयः ।
शरणीकृतवान्वेदः कर्णाटान्पटुचेतनान् ।

(B 1269) शास्त्रेष्वथर्ववेदस्य माहात्म्यं परिपश्यताम् ।
काश्मीरिकाणां तत्प्राप्त्यै चिरमासीन्मनोरथः ।

(B 1270) कालेऽथ विपुले याते सुहृभट्टभयाकुलः । [ 80 ]
युद्धभट्टाभिधो मानी देशान्तरमगाद् गुणी ।

(B 1271) यजुषः पठनात्प्रीतैः कर्णाटैः सोऽथ पाठितः ।
सरहस्यमथर्वाणं निजां प्रत्यागतो भुवम् ।

(B 1272) श्रीजैनोल्लाभदेनस्य गुणिनो गुणरागिणः ।
उपदीकृत्य तं वेदं परां तुष्टिमजीजनत् । [ 85 ]

(B 1273) दत्तस्वकीयवस्त्रान्नः शिर्यभट्टोऽथ धर्मवित् ।
तेनैवाथर्ववेदं तं द्विजपुत्रानपाठयत् ।

(B 1274) सा धर्मिष्ठा तु शालाऽस्य शिर्यभट्टस्य धीमतः ।
कर्णाटानामपि परमगमत्स्पृहणीयताम् ।

(B 1275) स्निग्धा विद्युच्छ्रवणमधुरं गर्जितं वृष्टिरिष्टा [ 90 ]
छाया भास्वत्क्लमभरहरी मारुतो मन्दमन्दः ।
वर्षाकालं विधिरनुदिनं वर्धयन्स्वैर्गुणौघै-
र्ग्रीष्मार्तासु प्रथयति दयादक्षिणत्वं प्रजासु ।

(B 1276) दशाविधुरभावेन विपक्षस्य बलेन वा ।
दानसंस्कारमानादावनुरूपे पराङ्मुखः । [ 95 ]

(B 1277) यस्मिन्नादमखानाख्ये ज्येष्ठे पुत्रेऽपि भूपतिः ।
अप्रसन्नो विदग्धत्वहीनैः सम्भावितश्चिरम् ।

(B 1278) हाज्यखानादिपुत्रेभ्यो विशेषाद्विहितादरः ।
विभासितः स राज्ञाऽपि तिलको मधुना यथा ।

(B 1279) आदौ पादतले सन्तं करालम्बं ततः कृतम् । [100]
यं दर्शनान्तरे च द्रागुत्तमाङ्गोपरि स्थितम् ।

(B 1280) अवर्धयत्क्रमादेव कलानां निधिमीश्वरः ।
मल्लादर्यावखानः स सर्वत्राधिकृतः कृतः ।

(B 1281) समो वैश्रवणस्यासीद्भट्टवैश्रवणो गुणैः ।
ईश्वरस्य प्रसादेन राजभिर्यदवर्त्यत । [105]

[(l. 7) D B लताभ्यः (emended as above with M). —(l. 8) D B इव (emended to अपि as above with M); D B स्वक (emended as above with M). —(l. 11) B शुश्रूवान् (sic). —(l. 17) D B एव (emended to इ° as above). —(l. 21) D एव (emended to इव as above with B). —(l. 23) D B निवृत्यताम् (emended as above with M). —(l. 26) D प्राप्तः (emended as above with B). —(l. 27) D B लेदरी-; M (evid. emend.) लेदरीं; M (evid. emend.) °णापय (for °ण प्राप्या); B प्राप्य मार्तण्ड- (sic). —(l. 32) D B आनाय (emended as above with M). —(l. 36) D B उदपू (mislec. for S'ār. मू)र (<ल) यत्; M marg. उदपुप्लवत् (for उदमूलयत्). —(l. 37) D B विदुषा स्थित्या (emended as above with M). —(l. 39) B शिर्यभट्ट- (by transp.). —(l. 43) M (evid. emend.) [अ]म्भसः. —(l. 45) M (evid. emend.) शिला तु. —(l. 52) B (evid. emend.) °ह्लाब°. —(l. 55) B (evid. emend.) मार्तण्ड-. —(l. 58) B (evid. emend.) मार्तण्डो. —(l. 60) B (evid. emend.) °ह्लाबदीनो. —(l. 65) D B सफेन- (emended as above). D -हासिता (emended as above with B). —(l. 73) D रणम् (emended to क्र° as above with B). —(l. 74) त्रिपञ्चाङ्कमिते is suggested for त्रिपञ्चाङ्ग°, cf. Kal. I. 51. —(l. 75) D कु (S'ār. letter for Dev.)रु-. —(l. 83) D B निजं (emended as above with M). —(l. 84) B (evid. emend.) °ह्लाबदी°. —(l. 85) D B उपधी° (emended as above). —(l. 88) B °ष्टा-तु शाला शि°; M (evid. emend.) पाठशाला (for तु शालास्य). —(l. 91) D B भासात् (emended as above with M); D क्र (illeg.) म-; B क्रम-; D -हरो (emended as above with M); B (evid. emend.) -हरिर्; B (evid. emend.) गाहते (for मारुतो). —(l. 92) D B स्वं (emended as above with M),

रुय्यभाण्डपतिं शिल्पकौशलाभ्युल्लसन्मतिम् ।
राजधानीमहाद्वारं नष्टं योऽयोजयत् पुनः ॥ ९४६ ॥

हिमाचलशिखादर्पच्छेदिप्रासादमेदुरम् ।
कमराज्ये स्फुरद्राज्यः सुरत्राणपुरं व्यधात् ॥ ९४७ ॥

जैनकोट्टं घट्टितारिरट्टशालि समन्ततः ।
नृत्यत्पट्टपताकान्तकान्तं राजा विनिर्ममे ॥ ९४८ ॥

जीर्णोद्धारेषु सर्वेषु निर्माणेषु नवेषु च ।
आज्ञा राज्ञो बभौ हेतू रुय्यभाण्डपतेश्च धीः ॥ ९४९ ॥

महापद्मसरस्तीरे जैनोपपदशालिनः ।
पुरमण्डपिकाघोषांस्तथा श्रीजैनकुण्डलम् ।
स जैनपत्तनं चाऽपि विदधे धरणीपतिः ॥ ९५० ॥

---

—(l. 98) B (evid. emend.) हाजी-. —(l. 101) D °नान्तरं (mislec for S'ār. रे); B (erroneously) चन्द्रम् ( for च द्राग् ). —cf. 962. —(l. 103) M (evid. emend.) मुल्ला-. —cf. 963. —(l. 105) M (evid. emend.) यो ह्यसेव्यत (for यदवत्स्यंत).

946 $S'_1$ missing (cf. v. l. 836). —a) $S'_2$ रव्य-; $S'_3$ रय्य-; $S'_4$ रथ-; K C रुप्य-; B रूप्य-; $S'_6$ रु (after corr. रू)प्य-; D रुय्य- (as in text); $S'_{2-4\cdot6}$ K C -भाण्डा ($S'_4$ ण्ड)⋯ शि° (blank filled as in text with D B); $S'_3$ -माण्डाधिपं. —b) $S'_{2-4}$ K C °न्यु ($S'_3$ त्यु) (mislec. for S'ār. भ्यु)ल्ल°. —c) $S'_2$ राजवा (sic) नी-. —cd) $S'_{3\cdot4\cdot6}$ (before corr.) K °रयोधमायो°; D B °रं नष्टं योऽयो° (as in text T); $S'_2$ C °रयोधमा⋯यो°. —d) $S'_4$ °जयं ([sic] for °जयत् ).

947 $S'_1$ missing (cf. v. l. 836). —a) D -शिला- (for -शिखा-). —b) $S'_{2-4\cdot6}$ (before corr.) K C -च्छेद- (emended as in text with D B. Thus after corr. in $S'_6$); $S'_{2\cdot4\cdot6}$ K C D B -मेदुराम् (emended as in text with $S'_3$). —d) D B $S'_6$ (after corr.) -त्राणः पुरीं.

948 $S'_1$ missing (cf. v. l. 836). —b) $S'_{2\cdot4}$ K (?)अट्ट- (mislec. for S'ār. ट्ट); $S'_3$ अद्रि-; D समं ततः. —c) $S'_{2-4\cdot6}$ K C तत्तत्पट्ट-; D B नृत्यत्पट्ट- (as in text).

949 $S'_1$ missing (cf. v. l. 836). —b) $S'_4$ वनेषु (by metathesis) (for नवेषु). —c) $S'_{2-4}$ हेतृ (mislec. for S'ār. तू ). —d) $S'_2$ रुप्य-; $S'_3$ C रूय्य-; $S'_{4\cdot6}$ K B रू ($S'_6$ before corr. रु)प्य-; D रुय्य- (as in text).

950 $S'_1$ missing (cf. v. l. 836). —c) $S'_{2-4\cdot6}$ K C मण्डयि (mislec. for S'ār. पि)का-. —e) $S'_3$ जेन-.

भूपतेः कोमलाकारा मनोज्ञाचरणाञ्चिता ।
अभिरामा महोदन्ता करुणा वल्लभाऽभवत् ॥ ९५१ ॥

अनिघ्नन्करुणानिघ्नो नरेन्द्रो डोम्बतस्करान् ।
बन्धयन्निगडैर्गाढं मृत्कर्माकारयत् सदा ॥ ९५२ ॥

निर्दिशन् यशसा शुभ्रा दिशो नृपतिरादिशत् ।
अवधं खगमत्स्यानामनेकेषु सरःसु सः ॥ ९५३ ॥

अथ जातु हृतां चौरैर्गां परिज्ञाय कश्चन ।
क्रन्दन्तं भूमिपः पृच्छंश्चौरांश्चाऽथाप्यढौकयत् ॥ ९५४ ॥

वयोलक्षणसंवादं विना गोस्तुङ्गश्रृङ्गताम् ।
सभाक्षोभणहेतुं स सत्यवाग् ब्राह्मणोऽब्रवीत् ॥ ९५५ ॥

तिलकादिवदेवाऽस्याः सहजा भुग्नश्रृङ्गता ।
राज्ञा पृष्टे वदत्येवं चौरे मूका सभाभवत् ॥ ९५६ ॥

---

951 $S'_1$ missing ( cf. v. l. 836 ). —[a]) $S'_{2-4\cdot6}$ K C B कोमलकरा ( emended as in text with D). —[b]) $S'_2$ मनांज्ञ°. —[c]) $S'_{2-4\cdot6}$ (before corr.) C आभिरामम° (emended as in text with K D B); D महोदत्ता (mislec for S'ār. न्ता).

952 $S'_1$ missing (cf. v. l. 836). —[c]) D निगढ (by syll. contam. for ड)र्. —[d]) $S'_{2-4\cdot6}$ (before corr.) K C मृत्करान्मारयन् (emended as in text with D B).

953 $S'_1$ missing (cf. v. l. 836). —[c]) D अवधे (mislec. for S'ār. धं).

954 $S'_1$ missing (cf. v. l. 836). —[a]) K D B हृ (D illeg.)तां. —[b]) D B $S'_6$ (gram. assim.) काञ्चन. —[d]) $S'_2$ चौराश्च सोप्यढौकयत्; $S'_3$ चौरांश्चाप्य··ढौकयत्; $S'_4$ चौरांश्चाप्यटौकटय ( sic ) त्; K (orig.) चौरांश्चायाप्यटौकयत् (after corr. as in text).

955 $S'_1$ missing (cf. v. l. 836). —[b]) $S'_{2-4\cdot6}$ (before corr.) K C RSs$_2$ सु (mislec. for S'ār. तु)ग्न (emended as in text with D B. Thus marg in $S'_6$). —[c]) $S'_{2-4}$ K C -क्षोभेण (emended as in text); D B -क्षोभन-; $S'_6$ (orig.) -क्षोभेण (after corr. -क्षोभन ). —[d]) D B अवदत् (for अब्रवीत् ).

956 $S'_1$ missing (cf. v. l. 836). —[a]) $S'_4$ निलका° (sic). —[b]) D B $S'_6$ marg. तुङ्ग- (for भुग्न-). —[c]) $S'_{4\cdot6}$ K C B (gram. assim.) वदन्ती (for वदति); $S'_2$ वदन्ये (mislec. for S'ār. त्ये)वं. —[d]) D B $S'_6$ (after corr.) चौरमू°.

परीक्षार्थं तिमिस्वेदे राज्ञा गोश्टङ्ग्योः कृते।
कुटिलत्वं व्यपैति स्म प्राक्चौरस्याऽथ श्टङ्ग्योः ॥ ९५७ ॥

एवं बुद्धिप्रकर्षेण व्यवहारविमर्शतः।
अमात्यपर्षदो हर्षश्चित्तोत्कर्षमजीजनत् ॥ ९५८ ॥

प्राड्विवाकः क्षमाबुद्धिर्युक्तदण्डत्वरञ्जकः।
राज्ञोऽवहत्प्रजाभारं गणनापतिगौरकः ॥ ९५९ ॥

यैर्दत्तमुपकारित्वादुत्कोचद्रविणं स्वयम्।
कालान्तरे कृतघ्नेषु तेष्वेवाऽऽस्थानमण्डपे ॥ ९६० ॥

प्रकाशयत्सु तद्दानं कुपितेन महीभुजा।
मौलानो मल्लएसाकस्तेभ्यस्तत् प्रतिदापितः ॥ ९६१ ॥

आदौ पादतले तिष्ठन् करालम्बीकृतस्ततः।
अथ चाक्षुषतां गच्छन्नुत्तमाङ्गोर्ध्ववर्तिताम् ॥ ९६२ ॥

नीतो दर्याविखानोऽथ कृतज्ञेनेश्वरेण सः।
कलानिधिर्हिमरुचिः कौमुदीं हि ततां वहन् ॥ ९६३ ॥

---

958 $S'_1$ missing (cf. v. l. 836). —b) D B $S'_6$ marg. ·विमर्शतः. —c) $S'_{2-4\cdot6}$ K C B हर्षचि° (emended as in text with D).

959 $S'_1$ missing (cf. v. l. 836). —a) D B $S'_6$ (after corr.) प्राड्विवाक°. —ab) $S'_{3\cdot4\cdot6}$ (before corr.) K C बुद्धियु° (emended as in text with $S'_2$ D B).

960 $S'_1$ missing (cf. v. l. 836). —c) $S'_3$ कृतघ्ने (*pr. m. sup. lin.* ज्ञे)षु.

961 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4\cdot6}$ K C तं भा(<तम्भा)रं (mislec. for S'ār. तद्दानं). —c) $S'_{2-4\cdot6}$ (before corr.) K C मल्वानमल्लानासाकस् (emended as in text with D B). —d) $S'_{3\cdot4}$ प्रतिपादितः ; D B $S'_6$ marg. प्रत्यपि (for तत् प्रति-).

962 $S'_1$ missing (cf. v. l. 836). —a) D B तिष्ठत्क° (mislec. for S'ār. न्क). —c) $S'_{2\cdot3\cdot6}$ K C D B चक्षुष्यतां. cf. 121* (ll. 100-101).

963 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4\cdot6}$ (before corr.) K C क्रीतो D B नीतो (as in text). —d) $S'_{3\cdot4}$ K C D B कौमुदें; $S'_6$ कौमुदी (before corr. दे) ; $S'_2$ कौमुदीं (as in text); $S'_{2-4\cdot6}$ (before corr.) K C हि ततो; D B हिततां (as in text). —cf. 121* (ll. 102-3).

दिनपतिर्न रसातलगं तमः
शमयितुं यतते यदवेक्ष्य सः ।
अतिलसद्रुचि कालघनावृतेर्
हरति तत्प्रतिबिम्बमहो क्षणात् ॥ ९६४ ॥

राजा भूभारखिन्नोऽपि खड्गधाराध्वगोऽपि सन् ।
स्वदत्तं विभवं यस्य दृष्ट्वा विश्राममाप्तवान् ॥ ९६५ ॥

अस्तं मह्मदखानः स कलानिधिरथाऽगमत् ।
अत्यन्तरमणीयानां सुचिरस्थायिता कुतः ॥ ९६६ ॥

प्रत्यब्दं प्रतिहार्याद्यैर्यो व्यधात्प्रीतिमर्थिनाम् ।
सत्यव्रतो दिवमगान्महिमश्रीः स ठक्कुरः ॥ ९६७ ॥

तद्गोत्रजेभ्यः शङ्कित्वा गूढं तस्य वधं क्वचित् ।
यो दूत्यच्छलतो राज्ञा स्वदेशान्निरवास्यत ॥ ९६८ ॥

राज्ञः सैन्धवशुल्कादिस्थाने सोन्ध्याभिधे पुरे ।
प्रत्यागतः स तीर्थाध्वखिन्नो विन्नो दिवं ययौ ॥ ९६९ ॥

---

964 $S'_1$ missing (cf. v. l. 836). —c) $S'_2$ -वलद्° ; $S'_{3\cdot4}$ -लवद्°
(for लसद्°); $S'_3$ D °वृत्तेर् ; $S'_2$ र् om. in °वृतेर्. —d) $S'_{3\cdot4}$ °मही
(for °महो); $S'_{2-4\cdot6}$ K C जगत् (prob. mislec. for क्षणात्).
966 $S'_1$ missing (cf. v. l. 836). —d) $S'_4$ -स्थापि(sic)ता; D °भाक्तत:
(mislec. for S′ār. ता कुत: ).
967 $S'_1$ missing (cf. v. l. 836). —a) D B प्रत्यहं; $S'_{2-4\cdot6}$ K C B
हार्यौघै ($S'_{3\cdot4}$ घै)र् ; D -प्रतिहर्याद्यैर् (as in text). —b) D B $S'_6$
marg. अर्थवान्. —c) $S'_4$ सत्यवन्तो (sic). —d) $S'_2$ visarga
ins. later in -श्री: .
968 $S'_1$ missing (cf. v. l. 836). —a) $S'_{2-4\cdot6}$ K C सकिला($S'_2$ ल)
D B $S'_6$ marg. शङ्कित्वाद् (emended to शङ्कित्वा as in text with
M); (for शाङ्कित्वा). —b) $S'_{2-4\cdot6}$ K C व्यधात् ; D B कचित् (as in
text). —c) D B $S'_6$ (after corr.) दूत- .
969 $S'_1$ missing (cf. v. l. 836). —a) B शुक्का° (sic). —b) $S'_3$ K
C -स्थाने [C s] साभिधे पुरे (submetric); $S'_2$ सौ· · ·भिधे; $S'_4$ चासौभि°;
D सोद्र्या° (illeg.); B सोध्यां (mislec. for Dev. द्र्या); $S'_6$ (orig.)
सौव्यं° (after corr. सोध्यां°) (emended as in text), see NOTES.
—d) K विन्नो om. by syll. hapl.

राज्ञो धर्माधिकारेषु प्रत्यवेक्षापरः सदा।
महाश्रीशिर्यभट्टोऽपि तस्मिन् काले दिवं ययौ ॥९७०॥

गतेष्वप्येषु धर्मोऽस्य राज्ञो नैवाऽल्पतां गतः।
क्ष्मां दधानस्य शेषस्य दिग्गजा हि परिच्छदः ॥९७१॥

एकाह एव दीन्नारकोटिरेका महीभुजा।
वालेभ्य एव दत्ताऽऽसीज्जय्यभट्टमुखेन यत् ॥९७२॥

अद्भुतानां पदार्थानां तद्राज्ये सङ्ग्रहोऽभवत्।
नारायणावतारोऽयं ज्ञायेत कथमन्यथा ॥९७३॥

येषां हिमांशुपीयूषप्रवाहा नित्यभिक्षवः।
इक्षवस्तेन मार्ताण्डदेशभूमिषु रोपिताः ॥९७४॥

त्यजता योगमाहात्म्याद् वलीपलितविक्रियाम्।
श्रीमद्दर्शननाथेन विबुधत्वं प्रकाशितम् ॥९७५॥

उद्दीपे सस्यसम्पत्तेरुपप्लवकरीं व्यधात्।
तूलमूलादपाकृष्य सिन्धुं भारोसगामिनीम् ॥९७६॥

इति श्रीजोनराजकृता राजतरङ्गिणी
समाप्ता॥

---

970 S′₁ missing (cf. v. l. 836). —c) $S'_{2-4\cdot6}$ K C $RSs_2$ -शिव (mislec. for S′ār. र्य).

971 S′₁ missing (cf. v. l. 836). —ab, D B राज्ञोस्य धर्मो. —d) $S'_4$ K C दिग्जजा (sic); $S'_2$ दिग्जलानि (for दिग्गजा हि); D B $S'_6$ (after corr.) (gram. assim.) °च्छदाः.

972 S′₁ missing (cf. v. l. 836). —a) $S'_2$ दीनार-. —d) $S'_4$ जय-.

973 S′₁ missing (cf. v. l. 836). —cd) $S'_{3\cdot4}$ K C यज्ञायते (sic) (for °यं ज्ञायेत). —d) $S'_6$ (before corr.) ज्ञायते.

974 S′₁ missing (cf. v. l. 836). —c) $S'_{4\cdot6}$ C B मार्तण्ड-.

975 S′₁ missing (cf. v. l. 836). —c) $S'_{2-4\cdot6}$ K C $RSs_2$ श्रीजैनोल्लाभदी ($S'_2$ दे) नेन; D B $S'_6$ marg. श्रीमद्दर्शननाथेन (as in text).

976 S′₁ missing (cf. v. l. 836). —a) $S'_6$ तदेयमति- (sic); $S'_{2-4}$ K C तदीयसत्य (mislec. for S′ār. उदीपे सस्य). —c) $S'_{2-4\cdot6}$ (before corr.) K C ···ल···दथ(C प्य)रुष्य (emended and blank filled as in text with D B. Thus in $S'_6$). —d) $S'_{2\cdot4}$ मारोस-; D B भारोत्स-.

Colophon. —$S'_{1.5}$ fol. missing. —$S'_{3.4.6}$ K C कृतौ (emended as in colophon); $S'_{3.4.6}$ K C add द्वितीया ($S'_4$ य–) before राजत°. —$S'_4$ K C सम्पूर्णा (for समाप्ता). —$S'_2$ इति श्रीपण्डितनोनराजसूनुश्रीपण्डितजोनराजविरचितायां राजतरङ्गिण्यां प्रथमस्तरङ्गः. —After colophon $S'_2$ concludes with पूर्वेण सह नवमस्तरङ्गः समाप्तः ९ ॥

रणवीरसिंहनृपतौ च[2] शासने
परितः सतीसरसमन्तके रिपोः ।
अलिखद् बुधः स खलु रामचन्द्रको
नृपनिम्नगां वसुशिवाक्षिवत्सरे ॥

सं ३८ राजानः २२ (ignoring Jayasimha) ग्रन्थः ९७२ आदितो रा १२५ आदितो ग्रन्थः ९०३८; $S'_3$ with शाकः १७८५; $S'_6$ with संवत् ४९८९ कावादि पञ्चम्यां पूरितैषा जोनराजकृता द्वितीया राजतरङ्गिणी पज्ज्यनोपाधिमता पण्डितमधुसूदनेन स्वात्मोपयोगार्थम् ॥

—After 976 D B $S'_6$ (on separate folio) ins. :

122* (B 1313) पूर्वाब्दतिथिवारर्क्षसङ्क्रान्त्याद्येकसाधनः ।
तिथिवारर्क्षसङ्क्रान्तीर्भाविन्यब्दे क्षणाल्लिखन् ।
(B 1314) तद्राज्ये रुय्यभट्टोऽभूद्राजवाल्लभ्यविश्रुतः ।
अनादरं खण्डखाद्ये कारयन्गणितागमे ।
(B 1315) चन्द्रेऽस्तं गत एव दैववशतः शोकाग्निशान्त्यै निशा [ 5 ]
तत्कान्ता रविकान्तवह्निमुदयात्कष्टं प्रविष्टा सती ।
द्यामारुह्य तदीयधूमकपटात्प्राप्ता पुनस्तन्महो
यत्सोऽयं ग्रहराजपादमहिमप्राप्तः प्रसादोदयः ।
(B 1316) ऋतुपतिः शिशिरेण समत्सरो-
प्यतिविरुद्धकरो न हितः स्थितः । [ 10 ]
यदि भुवं शिशिरो न विनाशयेत्
किमिव नाम मधुर्वत योजयेत् ।
(B 1317) सूहभट्टोऽथ शास्त्रार्थमण्डितोऽप्यथ पण्डितः ।
दर्शनद्वेषतः प्रेतदाहं वत निषिद्धवान् ।

१. $S'_2$ -सूनुः (emended as above).
२. $S'_2$ स (mislec. for S'ār. च).

(B 1318) प्रेतदेहास्तदा केचित्त्यक्ता गूढं जलान्तरे । [ 15 ]
अरण्ये केचन त्यक्ता निखाता बन्धुभिः परे ।

(B 1319) कालधर्ममुपेतेऽथ सूहभट्टे शनैः शनैः ।
प्रजा वीतभया कांश्चित्प्रेतान्गूढमदाहयन् ।

(B 1320) दोषान्दृष्ट्वा स्वयं राज्ञा सैदमके निराकृते ।
अदहन्प्रकटं प्रेतदेहानहनि बान्धवाः । [ 20 ]

(B 1321) अथाऽनुसरणात्पत्न्यः पत्युः सुकृतशालिनः ।
स्वर्गाङ्गनाङ्गसंसर्गात् पुण्यक्षयमवारयन् ।

(B 1322) भोक्तुं राज्यं पैतृकं तद्धात्रा दत्तं सठक्कुरः ।
जयनोल्लाभदेनोऽसौ कश्मीरान्प्रत्युपाययौ ।

(B 1323) हतानां वसुवासोस्त्रशिरस्त्रादि प्रगृह्य तत् । [ 25 ]
सदनं सधनं जस्सरथोऽप्यगाद्विमुच्यताम् ।

(B 1324) शुक्ले शुक्ले ब्रह्मणोऽह्नि रसाङ्केऽब्दे शशाङ्कगे ।
जयनोल्लाभदेनोऽसौ राजधानीं विवेश सः ।

(B 1325) दानातकथनेशस्य तनूजाय हनूमते ।
सर्वस्वकर्षणग्रामाधिपत्यं प्रददौ नृपः । [ 30 ]

(B 1326) मेरकाय ददौ भूभृदास्थानासनसंविदम् ।
कर्तुं विचारदक्षाय सत्यासत्यपरीक्षणम् ।

(B 1327) विवृद्धयत्ननाधिकारवरविप्रवीरैर्विटै-
भट्टैः कुटिलवर्त्मगैर्मथितमोहिताश्च प्रजाः ।
सुरेज्यधिषणं विचारचतुरं परं ठक्कुरं [ 35 ]
निरीक्ष्य युयुजे विचारपदनिर्णये मेरकम् ।

(B 1328) सेनाधिपत्यं वीराय ठक्कुरायोग्रतेजसे ।
विनूकपरमल्लेकनौरुजाय ददौ नृपः ।

(B 1329) लेदर्यां सन्यपारं सताजराजाय सोऽदिशत् ।
मल्लेशराजाय ददौ महाग्रामपरम्पराम् । [ 40 ]

(B 1330) विषयं देयनिर्मुक्तं नृपोऽप्यर्धवनाभिधम् ।
आदमाख्याय स ददौ महाविक्रमशालिने ।

(B 1331) प्रवरेशपुराधीशत्वं परं परमेश्वरः ।
वीराय मार्गपतये मल्लदाख्याय धीमते ।

(B 1332) भाङ्गिलविषयं भूभृत्स तुलायां ददौ नृपः । [ 45 ]
तस्यानुजान्मार्गपतींस्ताजकप्रमुखान्बहून् ।

(B 1333) पञ्चग्रामीं महार्घांश्च दत्त्वाऽश्वान्समतूतुषत् ।
श्रीजाकोट्टाधिपत्यं च मेरे-ष्कारपदं ददौ ।

(B 1334) ठक्कुरायाल्लदाख्याय महाग्रामांश्च पत्तलाम् ।
ठक्कुरेभ्योऽपरेभ्योऽसावपि मान्यतया समम् । [ 50 ]
महाग्रामसहस्राणि यथेष्टं प्रददौ नृपः ।

इति जोनराजकृता राजतरङ्गिणी समाप्ता ।

[(l. 1) D पूर्वाब्द (overwritten) ति°; B पूर्वा‾ति°; S′6 पूर्वार्ध– (evid. emend.). – (l. 2) D B भविनि (emended as above with M). —(l. 3) B (evid. emend.) रूप्य–; D B राज्यवा– (emended as above with M). —(l. 4) This line in D ends with figure १४५४. —(l. 8) D B यन्मो° (mislec. for S′ār. त्सो); D B [अ]हं (emended to °यं as above with M); S′6 om. -पाद–; D B -महिमा (emended as above with M); —(l. 11) D B [अ]पि (emended to न as above). D B -दाहं (emended to दोहास् as above with M). —(l. 15) (emended as above with M); D B त्यक्त्वा (evid. emend.) संवे (for मक्के). —(l. 19) B -मक्के (sic); M –(l. 24) B (evid. emend.) °ल्लावदी°. —(l. 20) B अदहं प्र° (sic). (emended to °सु as above with M). —(l. 25) D B वस्त्र गाद् (emended as above); (M evid. emend.) विमुच्य तान्. —(l. 26) D B [आ] —(l. 28) B °ल्लावदी°. —(l. 31) B (evid. emend.) मीर°. B भटः; —(l. 36) B (evid. emend.) मीर°. (erroneously.) मातुलाय (for स तुलायां). —(l. 45) M emend.) मीरे–. —(l. 48) B (evid. metric)]. —(l. 49) B ठक्कुराया (sic) मल्लदाख्याय (hyper-

Colophon. —B S′6 add श्री before जोन–; B S′6 कृतौ (sic) (for कृता); B S′6 add द्वितीया before राजत°. —D concludes with शुभमस्तु सर्वजगताम् । रामाय नमः; S′6 with शुभम् ॥

# NOTES

**55**

The reading सार्धं (Crit. App.) for सार्धान् is a case of gram. assim. to the context. It is influenced by dual द्वे दिने. The PT (MS f. 22b) and the *Wāqiāt-i-Kashmīr* (p. 25) correctly give the duration of Vuppedeva's reign as nine years, four months, and seventeen days; so the mention of "2½ days" for "17 days" in the *Dynastic History of Northern India* (I, p.174) and *Mīmāṁsā* (p. 378) is incorrect.

**78**

The PT (MS f. 23b) reads *mashghūl būd* 'was occupied with' for प्रमत्तं of Sanskrit manuscripts and editions; so the word has been emended to प्रसक्तं. Peeling off of birch-bark was, it appears, responsible for क्तं being read as त्तं by the scribes. This led them to read म for स.

**119**

As the PT(MS f. 25b) reads *jang kard* "fought" for मठं कृत्वा of Sanskrit manuscripts and editions, the correct reading in all probability is युद्धं (for मठं).

**146.**

The last syllable न्य in कालमान्य *Kālamānya* can also be read as त्य and तृ in Śār. script. The reading with न्य (Text, 146; 147; 151) has been tentatively accepted in view of its phonetic approximation to *Kharmang* and *bsKal-mon*.

**257**

The reading (नरिङ्ग) (var.) shown in Sanskrit manuscripts and editions appears to be corrupt for *Baring* (बरिङ्ग) of the PT(MS f. 30b). The text has been emended in the light of the latter reading. In the *Lokaprakāśa* (p. 60) the word is spelt as भृङ्ग.

**315**

The PT(MS f. 32b) reads *sih sal kamtar az panj roz* 'three years less by five days'; so मुक्त्वा for भुक्त्वा was the reading of the original used by the translator. Calculating from the dates which Jonarāja gives for the reigns preceding Shams-ud-din we have to assign to the latter's rule the period of two years, eleven months, and five days instead of three years and five days of the present text. No emendation suggests itself.

***28 (line 1)**

The PT(MS f. 33[a]) shows *dar Kishtwār raftand* 'they went to Kishtwar' for कष्टवाटागतान् of D, B; so the text has been emended to कष्टवाट–.

**370**

In the PT(MS f. 34[b]) *qamar wa sharāb wa bahār* 'the moon, wine, and spring' is read for मधुशीधुवधूर् ; so -विधून् ( for वधूर् ) is indicated.

**680**

According to Jonarāja tuberculosis withered द्विजराज. There is a pun on द्विजराज. It means (i) 'the moon', and (ii) 'the great Brāhmaṇa (Sūha Bhaṭṭa)'. This pun was possibly suggested to the chronicler by an allegory in which the moon ( = द्विजराज 'great Brāhmaṇa' ) is said to have contracted tuberculosis :

प्रजापतिर्वै सोमाय राज्ञे दुहितॄरदान्नक्षत्राणि । स रोहिण्यामेवावसन्नेतरासु । ता अनुपेयमानाः पुनरगच्छन् । तं राजयक्ष्मेणाग्राहयत् ।

(*Maitrāyaṇī-Saṁhitā*, ii. 2. 7).

Cf. §139.

**795**

The PT(MS f. 52[a]) reads *mīre shikār* for मेरेशायो (var.); so the text has been emended to मेरे-ष्कारो. Cf. *122 (line 48).

***115 (line 11)**

The PT(MS f. 54[b]) reads *chūn dārogha nau mī-shud* 'when a new officer was appointed'; so D, B show a mislec. तु for Śār. न्त in the word कारकान्तुरैः ।

**834**

स्मन्ल्ह *Sman la* ( pronounced *man la*) is the name of the Buddhist sculptures at the village Sheh in Ladakh. In view of the needs of Sanskrit metre and Śār. script, the word has been kept as समन्ल in the Crit. App. For *Sman la* see *History of Western Tibet* (p. 62).

**969**

*Sangoi* is situated between the Salt Range and the right bank of the river Jhelam south-west of Jhelam town in West Pakistan. The text has been emended in the light of this topographical name.

# VERSE INDEX

*to*

## Jonarāja's Rājataraṅgiṇī

### अ

# CORRIGENDA

## INTRODUCTION

| *Page* | *Line* | *Read* | *For* |
|---|---|---|---|
| 1 | 6 | MSS Ś 6+K1+D1 +M1 | MSS $Ś_6+K_1+D_1$ $+M_1$ |
| ,, | 20–21 | Sap. (49) 38 (1862 A. D.) | (Vikrama) Saṁvat 19 (38) (1881 A. D.). |
| 2 | last line | Page No 296. | Catalogue No 296 a |
| 3 | 19 | 36 to | 35 to |
| 4 | fn. | I, p. 46. | I, Preface, p. ix. |
| 8 | 3 | n2 | n8 |
| ,, | 13 | consulted it. | consulted. |
| 12 | 4 | recensions | recensions, |
| 13 | 11 | latter | later |
| ,, | 13 | K. $Ś_1$ | K,$Ś_1$ |
| 14 | 15-16 | °नलस्योत्थितिं 543$^c$, °ज्ञानि मम्मकं 550$^b$, विद्वेषोऽगात् 664$^d$. | °नलस्योत्थितिं 543$^c$ [ °ज्ञानि मम्माकं 550$^b$ [ विद्वेषोऽगात् 664$^d$. |
| ,, | 26 | for it | for, it |
| 15 | 6 | deviation | break-down |
| ,, | 22 | (67*) | (97*) |
| ,, | 24 | rechauffe | reshuffle |
| 16 | 11 | idolatry | idolatery |
| ,, | fn. 3, line 4 | (p. 92, n 7). | (§ 130, n 8). |
| 18 | 16 | Jonarāja | Since Jonarāja |
| ,, | 26 | there | as there |
| 19 | 7 | Maulānā Shāh | Maulānā Shāh, |
| ,, | fn. 2 | II, pp. 386-87. | pp. 386-87. |
| 21 | 11 | (p. 89, n 1). | (§ 124, n 18). |
| ,, | 12 | (see e.g., p. 92, n 1; p. 93, n 6). | (see e.g., §130, nn 2; 14). |

| *Page* | *Line* | *Read* | *For* |
|---|---|---|---|
| 21 | 15 | (p. 105, n 6), | (§ 147, n 8), |
| 22 | 20 | in about the last | in the last |
| ,, | 24 | (p. 89, n 3) | (§ 124, n 20). |
| 24 | 8 | kings | king |
| ,, | fn. 2, line 10 | ii. 139 | st. 397 |
| 28 | 6 | The dominant concern of the present editor has been | My.......has been |
| ,, | 7 | his | my |
| 29 | fn. 1, line 4 | p. 86, n 3; p. 110, n 1. | § 124, n 7; § 151, n 40. |
| 33 | fn. 1 | i.1.6 | I.6 |
| 34 | 9 | affords | afford |
| ,, | fn. 4 | p. 98, n 3 | § 136, n 1. |
| 43 | fn. 1 | 388 | 338 |
| 44 | 3 | described are: | described are |
| ,, | fn. 1, line 7 | and n 368; | and 368; |
| 46 | fn. 4 | 264-67 | 266-69 |
| 47 | fn. 1 | i.7.224 | i.7.226 |
| 51 | 6 | and | when |
| 52 | 5 | legends | legend |
| 53 | fn. 6, line 1 | It is now proposed | I now propose |
| ,, | fn. 6, line 2 | iv.413. | iv.415. |
| 54 | 15 | p. 58, n 5 | § 84, n 6. |
| ,, | fn. 7 | iv.413 | iv.415 |
| 56 | fn. 3 | St. 78 | St. 77 |
| 60 | fn. 1, line 2 | p. 59, n 3 | § 85, n 4 |
| ,, | fn. 2 | p. 51, n 4 | § 75, n 6 |

| *Page* | *Line* | *Read* | *For* |
|---|---|---|---|
| 66 | 7 | Kandahār. | Kandahāṛ |
| 67 | fn. 1, line 27 | (p. 110, n 1). | (§ 151, n 40). |
| 68 | fn. 2, line 4 | (p. 61, n 4) | (§ 89, n 3) |
| 69 | fn. 1, line 4 | (p. 83, n 3) | (§ 119, n 8) |
| 71 | 11 | to inflicting | to inflict |
| 72 | fn. 1, line 2 | (pp. 29-30), which | (pp. 29-30). Which |
| 73 | fn. 3, line 1 | (iv. 97) | (iv. 98) |
| 75 | fn. 5, line 2 | looked for | searched in |
| 76 | 12 | side. This | side, which |
| ,, | fn. 5, line 2 | p. 35, n 1 | § 56, n 5 |
| 77 | 12 | grew powerful | grew so powerful |
| 79 | fn. 6 | 281-82. | 281-83. |
| 80 | 10 | era | are |
| 81 | fn. 1, line 3 | dagger | daggar |
| 84 | fn. 5, line 3 | § 56, n 5. | § 56. |
| 86 | fn. 2, line 4 | may | my |
| ,, | ,, ,, 8 | iv.211-12 | iv. 212-13 |
| ,, | ,, ,, 16 | i.3.114 | i.3.113 |
| ,, | fn. 3, line 1 | (for शिङ्गा°) | (for शिङ्गा°) |
| | ,, ,, 5 | (st. i. 49). | (st. 49). |
| 87 | 9 | Puruṣavīra,[3] | Puruṣavīra or Peshawar,[3] |

